शिखाच्छेदो[1] पञ्चवारं यदि जायेत शत्रुभिः ॥ ६५ ॥
ब्राह्मण्यं तस्य नष्टं स्यात् पुनःसंस्कारतोऽपि तत् ।

### श्राद्धविघ्ने स्त्रीसंगे

श्राद्धविघ्ने समुत्पन्ने सन्ततं सूतकादिना ॥ ६६ ॥
अकृत्वैव तदा श्राद्धं नोपेयाच्च स्त्रियं तराम् ।
तदा [2]यद्याहितो गर्भो ब्रह्महत्याव्रतं चरेत् ॥ ६७ ॥
तदा सकृत्सन्निपाते प्राजापत्यत्रयं चरेत् ।
असकृद्गमनाच्चापाग्रयानं च[3] समाचरेत् ॥ ६८ ॥
तस्योपनयनं भूयश्चोदितं ब्रह्मवादिभिः ।
प्रविष्टपरकायो यः स्वभार्यां तेन वर्ष्मणा ॥ ६९ ॥
नोपेयात्तत्प्रविष्टः सन्नोपेयात्तस्य [4]तामपि ।
तादृशं कर्म कुर्याच्चेत्तत्कुलं स्वकुलं च ते ॥ ७० ॥
आत्मानं पातयेद्घोरे नरके रौरवाभिधे ।
नष्टे [5]त्रिप्रायके श्राद्धे पूर्वस्मिन् हविषि क्वचित् ॥ ७१ ॥
तदा पुनस्तत्संपाद्य हुत्वा प्राणादिभिश्चरुम् ।
द्वात्रिंशदाहुतेः पश्चात्तच्छेषेण समापनम् ॥ ७२ ॥
यत्तत्त्रिप्रायकं[6] श्राद्धं तस्यागूश्च समापनम् ।
अपराह्णे[7] च मध्याह्ने सद्यः पक्वं भवेद्धि वै ॥ ७३ ॥
पृथक् पाकात्तस्य[8] भुक्तिर्द्वितीये [9]तत्र नैव सा ।

[1] शिखाच्छेदे—च, ङ, घ.　[2] स्यादाहितो—क, ख.
[3] ०च्चापप्रया पश्च—क, ख; ०च्चापि प्रयानं च—च, ङ.
[4] तामपि—क, ख.　[5] त्रिप्रायिके—क, ख.
[6] ०प्रायिकं—क, ख.　[7] अपरेऽह्ने—च, ङ.
[8] स्वस्य for तस्य—ङ, घ.　[9] नैव तत्र सा—घ.

विप्राणां भुक्तिमात्रं [1]स्यादाभान्त्येतत्समाचरेत् ॥ ७४ ॥
संभान्त्यथ[2] मृताहस्य समारम्भो विधीयते ।
सर्वशेषं समादाय पिण्डांस्त्रीनेव निर्वपेत् ॥ ७५ ॥
अवशिष्टं प्राशयेच्च त्रिप्रायकविधौ तथा ।
[3]यत्नान्महाभीतिमति पश्चात्स्याद्भूरिभोजनम् ॥ ७६ ॥

## लाजहोमात्पूर्वं यदि रजस्वला

अर्वाक्तु लाजहोमस्य वधूर्यदि रजस्वला ।
हविष्मतीति मन्त्रेण शतकुम्भैर्विधानतः ॥ ७७ ॥
स्नापयित्वा विधानेन वस्त्राभ्यां [4]संपरीत्यतः ।
जुहुवा द्विवारं यत्नेन युञ्जानाहुतियुग्मकम् ॥ ७८ ॥
पृथगग्नौ स्थापितेऽथ जुहुयात्संस्कृतं घृतम् ।
पश्चात्तन्त्रं [5]प्रयोक्तव्यमाब्राह्मणविसर्जनम् ॥ ७९ ॥
योक्त्रं विमुच्य तां पत्नीं दूरतस्तु विनिक्षिपेत् ।
पश्चाच्चतुर्थदिवसे स्नातायां [6]समनन्तरम् ॥ ८० ॥
प्रवाहनादिकर्माणि[7] विधिनैव समाचरेत् ।
उभयोस्तु तदा [8]नित्यं विधिना स्यात्पयोव्रतम् ॥ ८१ ॥
तदौपासनहोमः स्यात्[9] समारम्भात्तु तन्मतम् ।

## लाजहोमात्परं चेत्

लाजहोमात्परं सा चेत्तदा तत्स्नानतः परम् ॥ ८२ ॥

[1] स्यादाभात्येतत्—ङ, च.  [2] संभात्यथ—क, ख; सभान्त्यथ—च, ङ.
[3] यत्नान्महाभीतपतिः—क, ख, ङ, च.  [4] तां परीत्यतः—क, ख, ङ, च.
[5] प्रयोक्तव्यं ब्रह्मणा विसर्जनम्—क, ख.  [6] तदनन्तरम्—क, ख.
[7] पुराहनादि कर्माणि—क, ख; प्रवाहकादिकर्माणि—च, ङ.
[8] नित्यविधिना—क, ख.  [9] तदौपासनहोमस्य—क. ख.

अर्वाक्तु शेषहोमस्य तूष्णीकं मन्त्रवर्जितम् ।
वस्त्रद्वयं प्रदायास्यै ताभ्यामाच्छाद्य तत्परम् ॥ ८३ ॥
अपावृत्ते[1] तृतीये च दिवसेऽथ[2] चतुर्थके ।
अह्नि द्वितीययामे वै [3]शतकुम्भैरमन्त्रितैः ॥ ८४ ॥
अभिषेकं कारयित्वा [4]शेषं कर्म समाचरेत् ।

औपासने त्वनारब्धे द्वितीयेऽह्नि चेत्

औपासने त्वनारब्धे [5]द्वितीयदिवसे यदि ॥ ८५ ॥
रजस्वला तदा तस्यै [6]हविष्मन्मन्त्रसेचनात् ।
परं वस्त्रद्वयं दत्वा तूष्णीकं मन्त्रवर्जनात् ॥ ८६ ॥
ताभ्यामाच्छाद्य तत्पश्चात्सहस्रैरुदकुम्भकैः ।
चतुर्थदिवसे कुर्यादभिषेकं समन्त्रकैः ॥ ८७ ॥
पञ्चगव्यैस्तिलैः[7] श्वेतैः सर्षपैः सर्वधान्यकैः ।
व्याहृत्या चैव गायत्र्या हुनेदष्टोत्तरं शतम् ॥ ८८ ॥
अष्टोत्तरसहस्रं चेत्सर्वदोषहरं परम् ।
आयुष्यसूक्तं हुत्वाथ चरुणा लाजतोऽपि वा ॥ ८९ ॥
होमशेषं समाप्याथ कर्मशेषं समापयेत् ।
पश्चाच्छुद्धिमवाप्नोति कर्मणस्तस्य केवलम् ॥ ९० ॥
तत्पञ्चमेऽथ दिवसे त्वौपासनपरिग्रहः ।
तयाथ[8] संगमो मासाद्गर्भाधानविधानतः ॥ ९१ ॥
[9]तद्गृहक्षेत्रमनसां परस्परविरोधतः ।

[1] उपावृत्ते—क, ख, ङ, च.
[2] च for अथ—घ.
[3] शतकुम्भैरमन्त्रितः—क, ख,
[4] शेषकर्म—क, ख.
[5] तृतीयदिवसे—क, ख.
[6] हविष्मन्नं प्रसेचनात्—घ.
[7] स्थितैः for तिलैः—क, ख.
[8] तया च—क, ख.
[9] तद्गृहक्षेत्र०—च, ङ, घ.

निरुद्धप्रेतकृत्यानां सूतकं तत्समापनात् ॥ ९२ ॥
निरुद्धप्रेतकृत्या ये तद्द्रव्यहरणेच्छया ।
तत्समापनपर्यन्तं तेषां तत्सूतकं भवेत् ॥ ९३ ॥

### आशौचे नित्यनैमित्तिकादि

तत्समापनपर्यन्तं न कुर्युः शुभकर्म च ।
[1]नित्यं नैमित्तिकं काम्यं ब्रह्मयज्ञादिकं तथा ॥ ९४ ॥
न स्वाध्यायं[2] न वा होमं[3] न सभायाः प्रवेशनम् ।

### प्रेतकृत्यरोधे

कुर्वीत मनसा संध्यां [4]न स्वादूनि च भक्षयेत् ॥ ९५ ॥
तानि[5] कुर्यात्तु मोहेन स प्रेतो न सहिष्यति ।
शापं घोरं ददात्येव तस्मात्तत्कृत्यरोधनम् ॥ ९६ ॥
मनसापि न कुर्वीत तच्चाण्डालं प्रकीर्तितम् ।
कृत्यं घोरं हि दुष्टं तत्तादृशं न [6]तदाचरेत् ॥ ९७ ॥

### अत्यन्यायादि कलौ न कारयेत्

अत्यन्यायमतिद्रोहमतिक्रौर्यं[7] कलावपि ।
अत्यक्रमं चात्यशास्त्रं न कुर्यान्न [8]च कारयेत् ॥ ९८ ॥
यदि कुर्वीत मोहेन सद्यो [9]विलयमेष्यति ।
कर्ता कारयिता चापि प्रेरकश्च निरोधकः ॥ ९९ ॥

[1] नित्यनैमित्तिकं—क, ख.
[2] स्वाध्यायो—क, ख, घ.
[3] होमो—क, ख, घ.
[4] स साधूनि—क, ख.
[5] तस्मिन्—च, ङ.
[6] तथाचरेत्—क, ख, घ.
[7] कार्यं for क्रौर्यं—ख.
[8] च—omitted by क.
[9] विलयमेष्यत:—च, ङ.

[1]तत्सहायश्च सर्वे ते लयमेष्यन्ति सत्वरम् ।
[2]गृहक्षेत्रादिकं सर्वं [3]न नित्यं शुभकारिणः ॥ १०० ॥
तन्निमित्तमिदं रूपं पापं मर्त्यो न चाऽऽचरेत् ।
आगामिसूतकं ज्ञात्वा समुपक्रान्तकर्मणः ॥ १०१ ॥
अङ्गापकर्षणं[4] नैव कुर्यादिति मनोर्मतम् ।
समागते सूतकेऽपि समुपक्रान्तकर्मणः ॥ १०२ ॥
अङ्गानि तत्तत्कालेषु कुर्यात्तत्र न सूतकी ।
भवेदेव तदा सद्यो गते तस्मिन् पुनस्तथा ॥ १०३ ॥

जीवत्पितृकपिण्डपितृयज्ञादिश्राद्धम्

अपि जीवत्पिता पिण्डपितृयज्ञं समाचरेत् ।
मासि श्राद्धं [5]तथा होमादष्टकां पितृयज्ञतः[6] ॥ १०४ ॥
पितुर्वियोगात्परतः पिण्डदानं समाचरेत् ।
तेनायं श्राद्धकर्ता स्यान्न मातुः पिण्डदानतः ॥ १०५ ॥
जीवे पितरि [7]चेच्छ्राद्धे प्राप्ते नैमित्तिके यदि ।
येभ्य[8] एव पिता [9]दद्यात्तेभ्यो दद्यात्तु तत्सुतः ॥ १०६ ॥
एवं पितामहे जीवे येभ्यो दद्यात् स हि स्वयम् ।
तेभ्यो दद्यात्तु तत्पौत्रस्तथा स्यात्प्रपितामहे[10] ॥ १०७ ॥

[1] घ has also the marginal heading here: 'तत्सहायी च'।

[2] ग्रह for गृह—च, ङ.

[3] तत्सर्वं शुभकारिणः—च, ङ; न नित्यं शुभकारिणा—क, ख.

[4] अङ्गारकर्षणं—ख; अङ्गोपकर्षणं—च, ङ.

[5] तदा—घ.

[6] पितृयज्ञकः—च, ङ.

[7] च श्राद्धे—घ.

[8] एभ्य—क, ख.

[9] दत्वा तेभ्यो—क, ख.

[10] प्रपितामहान्—च, ङ.

## पितरि संन्यस्ते पातित्यादिदूषिते तत्पित्रादिश्राद्धम्

संन्यस्ते पतिते ताते भ्रान्तचित्ते [1]चलात्मनि।
तत्कर्तृकाणि[2] श्राद्धानि स्वयं पुत्रः समाचरेत्॥ १०८॥
तत्तत्कालेषु [3]विधिवच्छ्राद्धकर्ता [4]न तेन सः।
तेषामकरणात्सोऽयं सद्यश्चण्डालतां व्रजेत्॥ १०९॥
श्राद्धाधिकारी पिण्डस्य [5]दानमात्रेण जायते।
ऋत्विक्त्वेन [6]वृते तस्मिन् न तु कर्ता भवेदयम्॥ ११०॥
पितुः पिण्डप्रदानेन श्राद्धकर्ता भवेदयम्।
[7]श्राद्धाधिकारसिध्यर्थं कुर्यादेकादशेऽहनि॥ १११॥
पार्वणं तद्विधानेन पितुः सिद्धेरनन्तरम्।
कर्मन्दी ब्रह्मभूतस्य[8] [9]तदा तस्मिन्नियोजयेत्॥ ११२॥
प्रतिसंवत्सरं सिद्धिदिने श्राद्धं समाचरेत्।
पश्चादाराधनं कुर्यात्तस्मिन्नो चेत्परेऽहनि॥ ११३॥
[10]ब्रह्मभूतस्य तस्यास्य सर्वदेवादिरूपिणः[11]।
संगच्छते[12] पितृत्वं च तेन रूपेण तं तथा॥ ११४॥
तस्मिन् श्राद्धदिने [13]भक्त्या [14]यजेदेव विधानतः।
तादृक् [15]तद्यजनं चास्य श्राद्धनामककर्मणः॥ ११५॥

[1] चरात्मनि—क, ख.
[2] त..... णि—क, ख; तत्प्रकाराणि—च, ङ.
[3] विधिना—च.
[4] नवेन यः—च.
[5] दानपत्रेण—ङ.
[6] मृते—क, ख, ङ, च.
[7] श्राद्धाधिकारिसिध्यर्थं—च, ङ.
[8] ब्रह्मघातः स्यात्—घ.
[9] तं तदास्मिन्—घ.
[10] ब्रह्मभूतस्यास्य यतेः—घ.
[11] रूपिणीः—ङ.
[12] संगच्छन्ते—क.
[13] भुक्त्वा—क, ख.
[14] यतेदेव—क, ख; यतेरेव—घ.
[15] तद्वपजनं—घ.

[1]अधिकारित्वसिध्यर्थं तस्मात्तेनैव तं यजेत् ।
न मातरं पितृत्वेन [2]यजेत तु कथंचन ॥ ११६ ॥
पितृत्वं मातरि गतमेकशेषजमल्पकम् ।
यथा न तत्कार्यकरं मातृत्वमपि तत्तथा ॥ ११७ ॥

पितृव्यपत्न्यादीनाम्

पितृव्यपत्न्यादीनां स्यात्तादृक्पत्नीत्वमेव हि ।
तासां भवति तस्मात्तु न तन्मातृत्वमुच्यते ॥ ११८ ॥
पितृत्वमपि मातृत्वं दानतो नाशमेष्यतः ।
तत्कर्मणि पुनः प्राप्ते जननीत्वादिना भवेत् ॥ ११९ ॥
पितृत्वमपि मातृत्वमेकत्रैव हि तिष्ठति ।
न तिष्ठति तदन्यत्र क्रियाशतसहस्रकात् ॥ १२० ॥

गौणमातरि

गौणमातरि मातृत्वं पुरस्कृत्यार्थलोभतः ।
समुच्चार्य क्रियां [3]कुर्यान्न सा तद्वा भवेद्ध्रुवम् ॥ १२१ ॥
[4]लोभान्मातृत्वमन्यासु यदि निक्षिप्य मोहतः ।
क्रियां कुर्याज्जडमतिः[5] सद्यश्चण्डालतां[6] व्रजेत् ॥ १२२ ॥
अतस्मिन् तत्त्वमारोप्य संस्कुर्याद्यदि कामतः ।
निष्फलं याति तत्कर्म सोऽपि पातित्यमाप्नुयात् ॥ १२३ ॥
पितृत्वं [7]जनितर्येव मुख्यतोऽन्यत्र गौणतः ।
तत्पुरस्कृत्य चेत्कर्म [8]कृतमन्यैः पुनः क्रिया[9] ॥ १२४ ॥

[1] अधिकारत्व—क, ख. [2] न यजेतु—ङ; हि यजेतु—घ.
[3] कुर्वन्न—क, ख. [4] मोहान्मातृत्वमन्यासु—क, ख, घ.
[5] जितमतिः—ङ. [6] चाण्डालतां—क, ख.
[7] जनिरित्येव—च. [8] कृतमन्ये—क, ख, च, ङ. [9] क्रियाम्—घ.

विहितेनैव पुत्रत्वं[1] स्वीकारेण न [2]चान्यतः ।
समवाप्नोति बन्धूनां राजविद्वदनुज्ञया ॥ १२५ ॥

भ्रातृजः कृतदारः कृतक्रियोऽपि

भ्रातृजो [3]वाक्यतः [4]पित्रोर्ज्यैष्ठ्यकानिष्ठ्यवर्जितः ।
पुत्रत्वं समवाप्नोति कृतदारः कृतक्रियः ॥ १२६ ॥
सोऽप्येकश्चेदवाप्नोति नोभयोस्तु तथा विधिः ।
जनितुर्मुख्यसूनुः स्यादन्यस्य गुणतः सुतः ॥ १२७ ॥
[5]मातुलत्वपितृव्यत्वसुतत्वाद्यनुबन्धकम् ।
मुख्यतो यस्य यद्वा स्यात्तदुद्दिश्यैव तत्क्रिया ॥ १२८ ॥
मुख्यानुबन्धं त्यक्त्वा यः कर्म कुर्यात्प्रमादतः[6] ।
पितृव्यादिकमुच्चार्य पुनः कुर्यात्तु तां क्रियाम् ॥ १२९ ॥

गोत्रनामानुबन्धव्यत्यासे

गोत्रनामानुबन्धानां [7]व्यत्यासेनाप्यनेहसः ।
यदि कुर्यात्क्रियां तां वै पुनः कुर्याद्यथाविधि ॥ १३० ॥
उपनीतस्तु [8]चेदुपनेतृत्वेनैव तत्क्रिया ।
विद्यादत्वेन तद्दातुर्भक्तदत्वेन तत्प्रदे ॥ १३१ ॥
भयपत्वेन भयपे पितृव्यत्वेन तादृशे ।
तत्तदुच्चारणं कृत्वा तत्तत्कर्म समाचरेत् ॥ १३२ ॥
[9]तदन्यथाकृतं तच्चेत् सम्यग्भूयः समाचरेत् ।

1 पुत्रत्वस्वीकारेण—च, ङ.
2 दास्यतः—च.
3 वाग्यतः—च, ङ.
4 पित्रा ज्येष्ठ०—क, ख; पित्रोर्ज्येष्ठ०—ङ.
5 मातुलत्वे पितृव्यत्वे—घ.
6 प्रमादकः—क, ख; प्रमोदतः—च.
7 व्यत्यसेनात्यनेहसः—ङ; व्यत्यासेनात्यनेहसः—च.
8 चेदुपनीतत्वेनैव—क, ख.
9 Line omitted by च.

### कर्तरि दूरगे प्रेष्यत्वेन कुर्वीत

[1]मुख्यकर्त्रसमीपेऽन्यो न कुर्यात् स्वानुबन्धतः[2] ॥ १३३ ॥
तत्प्रेष्यत्वेन कुर्वीत प्रेषितस्तेन वै [3]वृतः ।
अवृतस्तेन[4] तत्प्रेष्यत्वेन तद्दूरगे सति ॥ १३४ ॥
कृतं चेत्कर्म तद्भूयः संकल्पादि समाचरेत् ।

### अन्येन कृते वाङ्मात्रदाने श्राद्धमात्रम्

वाङ्मात्रदत्तपुत्रस्तु कृतदारः कृतक्रियः ॥ १३५ ॥
ग्राहकस्य न कुर्वीत दर्शादि न कदाचन ।
तत्पत्न्यास्तस्य च श्राद्धमात्रं सम्यक् समाचरेत् ॥ १३६ ॥
[5]प्रतिवर्षं प्रयत्नेन न दर्शादिकमाचरेत् ।
सतामेव हि बन्धूनां कर्म कुर्यात् प्रयत्नतः ॥ १३७ ॥
भ्रष्टानामपि तुच्छानां पतितानां विकर्मिणाम् ।
न कुर्वीत क्रियां यत्नादपि [6]स्नानं समाचरेत् ॥ १३८ ॥
असतां पतितानां च भस्मान्तं सूतकं स्मृतम् ।

### भ्रष्टपतितानां घटस्फोटनाधिकारिणः

जातिभ्रष्टानकर्मिष्ठान् पतितान् मातरं [7]सुतम् ॥ १३९ ॥
पितरं भ्रातरं पत्नीं पतिमेवं [8]मिथोऽसतः ।
त्यजेद्धटप्रहारेण नान्यानेवं समाचरेत् ॥ १४० ॥

[1] मुख्यकर्ता स०—क, ख.
[2] सानुबन्धतः—क, ख, ङ, च.
[3] स्वतः—क, ख; कृतः—च, ङ.
[4] अकृतस्तेन—क, ख, च, ङ.
[5] The following four lines are omitted by च.
[6] स्नानं न चाचरेत्—क, ख, ङ.
[7] सुतः—क, ख.
[8] विदोसतः—च, ङ.

अनाथप्रेतसंस्कारे

अनाथप्रेतसंस्कारादश्वमेधफलं [1]लभेत् ।
प्रेतनिर्वापणं[2] प्रोक्तमत्र संस्कारशब्दतः ॥ १४१ ॥

प्रेतसंस्काराभावे

अकृत्वा प्रेतसंस्कारं यो भुङ्क्ते कामकारतः ।
तत्प्रेतकृतपापौघं तत्क्षणाल्लभतेऽखिलम्[3] ॥ १४२ ॥
तद्दोषशमनायाथ चापाग्रे स्नानमाचरेत् ।
मासमात्रं प्रयत्नेन न चेदुक्थ्यं समाचरेत् ॥ १४३ ॥

विप्रानुज्ञया यतिकृत्यम्

विप्राभ्यनुज्ञया कुर्यात् कर्ममात्रं विशेषतः ।
पितृकृत्यं प्रेतकृत्यं[4] तयोर्नो चेद्यतेरपि ॥ १४४ ॥
विप्रानुज्ञां यतिरपि लब्ध्वा [5]स्नात्वार्द्रवस्त्रतः ।
प्रेतकृत्यं प्रकुर्वीत न चेत्[6] कृत्यं तु तन्न तु ॥ १४५ ॥
अपि शास्त्रकृतं कर्म बहुविप्रामतं [7]तु यत् ।
तदभ्यनुज्ञया तत्तु [8]कर्मतः पुनराचरेत् ॥ १४६ ॥
बहुविप्रतिरस्कारप्रद्वेषागःप्रदूषितम्[9] ।
तदभ्यनुज्ञारहितं यत्तत्कर्म पुनश्चरेत् ॥ १४७ ॥

कर्तरि सन्निहितेऽकर्तृकृतं पुनः

यद्यकर्तृकृतं कर्म समीपे कर्तरि स्थिते ।

[1] भवेत्—क, ख.
[2] प्रेतनिर्वहणं—क, ख, घ.
[3] खलु for अखिलम्—क, ख ; खलम्—च.
[4] प्रेतकृत्यं—omitted by क and ख.
[5] न त्वार्द्रवस्त्रतः—क, ख, ङ, च.
[6] च—क, ख.
[7] च यत्—क, ख.
[8] धर्मतः—क, ख, ङ, च.
[9] ०प्रद्वेषादप्रदूषितम्—क, ख, घ.

धनवृत्तिगृहक्षेत्रहेतवे तत्पुनश्चरेत् ॥ १४८ ॥

### असगोत्रसंस्कृतावाशौचम्

असगोत्रमपि प्रेतं दाहयेद्यः कथंचन ।
स चापि गोत्रिभिस्तुल्यो दशाहं सूतकी भवेत् ॥ १४९ ॥

### मृताहस्य परित्यागे मातापित्रोः

मृताहस्य परित्यागे मोहात्कृच्छ्रद्वयं चरेत् ।
गायत्रीदशसाहस्रजपो गोदानमेव च ॥ १५० ॥
एवं पञ्चत्रिंशवर्षपर्यन्तं [1]चित्तमुच्यते ।
पृथक्त्वेन महाभागैस्तदूर्ध्वं पतितो भवेत् ॥ १५१ ॥

### नदीस्नानेन निष्कृतिः

महानदीस्नानशतं पित्रोस्त्यक्ते तु पैतृके ।
निष्कृतिः कथिता सद्भिः पुनःसंस्कारतस्तथा ॥ १५२ ॥
नदीस्नानानि सर्वत्र सर्वकृत्येषु वच्मि वः ।
निष्कृतित्वेन विप्राणां वेदिनामभ्यनुज्ञया ॥ १५३ ॥
न हि स्नानेन सदृशी निष्कृतिर्विहितास्ति [2]हि ।
तस्मात्स्नानानि सर्वत्र तीर्थादिषु विशिष्यते ॥ १५४ ॥

### संहितापठनादिः

श्रुतिपारायणं यद्वा व्याहृतीनां जपोऽथवा ।
गायत्र्या वा जपो नो चेन्महारुद्रजपोऽथवा ॥ १५५ ॥
पुरुषसूक्तजपो वापि संहितापठनं सकृत् ।
निष्कृतिर्विहिता[3] सद्भिरपि पातकिनामपि ॥ १५६ ॥

[1] चित्रमुच्यते—च, ङ. [2] वा—च. [3] निष्कृतिः कथिता—च, ङ.

### वेदमहिमा

वेदाक्षरोच्चारणतः सर्वनामफलं [1]लभेत् ।
हरिनामानि यावन्ति पठितानि द्विजातिभिः ॥ १९७ ॥
असंख्याकान्यनन्तानि[2] सर्वाविलहराण्यपि[3] ।
तान्येकवेदवर्णः स्यात्तादृशैर्दिव्यवर्णकैः ॥ १९८ ॥
अमेयैः संवृतो वेदः साक्षान्नारायणात्मकः[4] ।
तादृशस्यास्य वेदस्य पठनात् सर्वकिल्बिषैः ॥ १९९ ॥
सद्य एव विमुक्तः स्यात् पातकी नात्र संशयः ।

### ब्राह्मणस्य वेदाधिकारः

तादृशस्यास्य वेदस्य पठने ब्राह्मणस्य वै ॥ १६० ॥
अधिकारो न चान्यस्य संस्कृतस्यैव कर्मभिः ।
[5]तत्रापि परिशुद्धस्य कृतनित्यक्रियस्य वै ॥ १६१ ॥
तत्रापि परिशुद्धस्य [6]विशेषेषु [7]दिनेष्वपि ।
शुद्धाच्छुद्धः स्वतो[8] वेदस्तदुच्चारणतः क्षणात् ॥ १६२ ॥
[9]देवनामान्यनन्तानि [10]निखिलान्यघहानि वै ।
असकृत्पठितानि स्युर्नात्र कार्या विचारणा ॥ १६३ ॥
स्नानं कृत्वा प्रारभेच्च [11]वेदं तं तादृशं शिवम् ।

[1] भवेत्—क, ख, घ. [2] असंख्यातान्यनन्तानि—घ.
[3] अति for अपि—क, ख; च and ङ omit this quarter verse.
[4] नारायणात्मनः—ख.
[5] Line omitted by क and ख; supplied by च, ङ and घ.
[6] All Mss. read विशेष्वेव.
[7] दिनेष्वति—क; दिनेष्यति—ख; दिनेष्विति—ङ.
[8] शुद्धो बुद्धः स्वतो—क, ख; शुद्धाच्छुद्धस्ततो—च, ङ; शुद्धाच्छुद्धस्त्वतो—घ.
[9] वेद for देव—घ. [10] निखिलान्यपहास्य वै—च, ङ.
[11] वेदान् तान् तादृशः—ङ.

### अस्नात्वारम्भे

यद्यस्नात्वैव मोहेन प्रारभेत् पातकी भवेत् ॥ १६४ ॥
स्नानतः सर्वकर्माणि सिध्यन्त्येव न संशयः ।

### सर्वं स्नानमूलम्

स्नानमूलमिदं [1]ब्राह्मं स्नानमूलमिदं तपः ॥ १६५ ॥
स्नानमूलाखिला यज्ञाः स्नानमूलमिदं जगत् ।
सर्वकृत्येषु सर्वत्र स्नानमेव परं मतम् ॥ १६६ ॥
कृत्स्नेष्वशुचिषु स्नानं [2]तारकं परिकीर्तितम् ।

### अस्पृश्यस्पर्शनादिकर्माङ्गस्नानम्

अस्पृश्यस्पर्शने चैवमभक्ष्याणां च भक्षणे ॥ १६७ ॥
संकलीकरणे चात्र मलिनीकरणे तथा ।
अपात्रीकरणेऽन्यत्र जातिभ्रंशकरादिषु ॥ १६८ ॥
सूतकादिषु सर्वेषु-[3]सर्वेष्वाशौचकर्मसु ।
स्नानमेव परं प्रोक्तं सर्वकृच्छ्रव्रतादिषु ॥ १६९ ॥
सर्वाद्यन्तेषु सत्रेषु तदेव परिकीर्तितम् ।
अभोज्यभोजनेष्वेवं स्नानं तत्समुदाहृतम् ॥ १७० ॥
अकार्यकरणेष्वेषु[4] मुख्यस्नानानि मुख्यतः ।
भवेयुर्हि पवित्राणि तानीमानि ततः सदा ॥ १७१ ॥
चरेद्यत्नेन शुध्यर्थं न चेत्किं वात्र [5]शुध्यति ।

### वमने स्नानम्

स्वक्रियावमने सद्यः सवासा जलमाविशेत् ॥ १७२ ॥

[1] ब्राह्मं—क, ख.  [2] तापकं—च.  [3] सर्वेषां शौचकर्मसु—क, ख.
[4] एव for एषु—घ.  [5] सिध्यति—क, ख, ङ, च.

अजीर्णवमने स्नानमौषधादिक्रियावशात् ।

वमने स्नानाभावस्थलम्

वमनेऽप्यवगाहः स्यान्मक्षिकामूलतो यदि ॥ १७३ ॥
नावगाहः प्रकर्तव्यस्तल्लेपक्षालनं[1] परम् ।
प्रकर्तव्यं प्रयत्नेन धारणं शुद्धवाससाम् ॥ १७४ ॥

शाकमूलादिवमने

शाकैर्मूलैः[2] फलैः पत्रैः कटुतिक्तरसादिभिः ।
सद्यश्चेद्वमनं तत्र चिरकाले तु तद्भवेत् ॥ १७५ ॥
यदा[3] चेद्रोगवमनं [4]तदा स्नानं विधानतः ।
सद्य एव प्रकर्तव्यमघमर्षविधानतः ॥ १७६ ॥

रात्रौ वमने

रात्रौ तु वमने जाते [5]रोगाद्यैरप्यजीर्णतः ।
अर्धरात्रादधस्तूष्णे पाथसि स्नानमुच्यते ॥ १७७ ॥
तत्परं प्रातरेव स्यादिति [6]शाकलभाषितम् ।

स्वगोत्रत्यागेऽन्यगोत्रपरिग्रहणे

स्वीयगोत्रपरित्यागादन्यगोत्रपरिग्रहात् ॥ १७८ ॥
प्रभवेत्पतितः सद्यः शुद्धः संस्कारतः पुनः ।
स्वीयगोत्रपरित्यागो भिन्नगोत्रपरिग्रहः ॥ १७९ ॥
द्वयमेतत्प्रकथितं स्त्रिय एव हि नुर्न तु ।

[1] ततः प्रक्षालनं—क, ख; तल्लेपक्षेपणं—घ. [2] शाकमूलैः—क.
[3] यथा—क, ख, घ. [4] तथा—क, ख.
[5] रोगाद्यैरप्यजीर्णतः—क, ख; रौगाद्यैर्वाप्यजीर्णकैः—च, ङ.
[6] गौतमभाषितम्—घ.

### अर्धोदयः

अर्कश्रुतिव्यतीपातयुक्ताऽमा पुष्यमाघयोः ॥ १८० ॥
असावर्धोदयो योगः कोट्यर्कग्रहसंनिभः ।
अस्मिन् स्नातो चापकोटौ कुर्यात्स्नानशतं[1] यदि ॥ १८१ ॥
त्रिंशद्वर्षं त्यक्तपितृकर्मा[2] शुद्धो [3]भवेत्ततः ।
महोदये[4] तु तत्स्नानसहस्रं यदि भक्तितः ॥ १८२ ॥
कुर्याद्वा कारयेद्वापि शुद्धः पूर्वाघतो भवेत् ।
अन्यथा निष्कृतिर्नास्ति तादृशस्यास्य पापिनः ॥ १८३ ॥
[5]तं योगं सुसमीक्ष्येत तस्मात्तादृक्तु किल्बिषी ।

### पत्यन्येन चितारोहितायाः पुत्रस्य कृत्यम्

यदि साध्वी प्रमादेन पत्यन्येन चितिं व्रजेत् ॥ १८४ ॥
कथं तत्कर्मकरणं पश्चात्तज्जातजन्मनाम् ।
इति चिन्तापरा देवा बभूवुः किल वै चिरम् ॥ १८५ ॥
पश्चादुदभवद्वाणी [6]दिव्या स्पष्टपदाक्षरा ।
पत्यन्यनरयोगस्य[7] षडब्दं कृच्छ्रमुच्यते ॥ १८६ ॥
मोहात् प्राणपरित्यागे महापापस्य कर्मणः ।
तस्याः षडब्दं संप्रोक्तं [8]षड्गुणेनैव संयुतम् ॥ १८७ ॥
सदानेनैव कुर्वीत लोभशाठ्यविवर्जितम् ।
तद्दोषशमनायैव प्राणत्यागाख्यकर्मणः ॥ १८८ ॥

[1] स्नानजपं—च, ङ [2] त्रिंशद्वर्षंत्यक्तपितृकर्मा—क, ख; त्रिंशद्वर्षं त्यक्तपित्र्यकर्मा—ङ.
[3] भवेदपि—क, ख, ङ, च. [4] महोदयौ—घ.
[5] Line omitted by क, ख, ङ and घ; supplied by च.
[6] दिव्यस्पष्टपदाक्षरा—घ. [7] पत्यन्यपरयोगस्य—च, ङ; पत्यन्यपरयोगे स्यात्—घ.
[8] षड्गुणैव हि संयुतम्—च, ङ.

चापाग्रयानं कृत्वादौ तत्र स्नानशतं चरेत् ।
पक्षमात्रं प्रयत्नेन नित्यं [1]प्रियपुरःसरम् ॥ १८९ ॥
तच्छान्तिस्तेन नान्येन [2]सार्धसाहस्रमज्जनैः ।
ब्राह्मणानां प्रसादेन कूष्माण्डगणपाठतः[3] ॥ १९० ॥
नित्यं त्रिवारं तत्रैव पश्चात्तु प्राकृतं चरेत् ।
ततः शुद्धा भवेत्सा तु तैरेतैः कर्मभिः शुभैः ॥ १९१ ॥

जातिभेदेन निष्कृतिः

द्विगुणं राजयोगेन त्रिगुणं वैश्ययोगतः ।
चतुर्गुणं शूद्रयोगादेवं निष्कृतिरीरिता ॥ १९२ ॥

स्त्रियः पुनर्विवाहे

पुनर्विवाहिता मूढैः पितृभ्रातृमुखैः खलैः ।
यदि सा तेऽखिलाः सर्वे स्युर्वै निरयगामिनः ॥ १९३ ॥
पुनर्विवाहिता सा तु महारौरवभागिनी ।
तत्पतिः पितृभिः सार्धं कालसूत्रगतो भवेत् ॥ १९४ ॥
दाता चाङ्गारशयननामकं प्रतिपद्यते ।

तस्य निष्कृतिः

तद्दोषशमनायाथ प्रायश्चित्तमिदं परम् ॥ १९५ ॥
दाता सेतुगतः सद्यो धनुष्कोट्यां समाहितः ।
नित्यं त्रिषवणस्नायी यावकाहार एव वै ॥ १९६ ॥
संवत्सरं प्रयत्नेन वसेदेवान्वहं तराम् ।
स्वकृतं यच्च तत्पापं वदन्नित्यमटन् यतन् ॥ १९७ ॥
सर्वेष्वपि च तीर्थेषु तप्तकृच्छ्रशतं चरेत् ।
ततः शुद्धो भवेदेवं वोढा चापि [4]तदा पुनः ॥ १९८ ॥

[1] प्रियपुरःसरम्—क, ख. [2] सार्धं—घ. [3] पाठकः—क, ख, घ. [4] ततः—ङ.

तद्दोषशमनायैव पुण्यं [1]चान्द्रायणत्रयम् ।
[2]यत्नात्कुर्वन् [3]वसेत्तत्र ऋतुत्रयमतन्द्रितः ॥ १९९ ॥
प्रतिनित्यं पञ्चगव्यं पिबंस्तद्विधिना [4]रुदन् ।
निर्लज्जया लोकपुरः कूष्माण्डादीन् पठंस्तथा ॥ २०० ॥
द्रुपदां[5] नाम गायत्रीं गायत्रीं वेदमातरम् ।
संध्यात्रये सहस्राणि जपंस्तत्षाख्यकं शिवम् ॥ २०१ ॥
कृच्छ्रं विधानतः कृत्वा पुनःसंस्कारतः पुनः ।
पुटगर्भविधानेन शुद्धो भवति तत्र चेत् ॥ २०२ ॥
न चेत्तप्तशतं कुर्यात् पुनरुपनयात्परम्[6] ।
सा चेद्भर्तृद्वयं त्यक्त्वा सेतुस्नानसहस्रकम् ॥ २०३ ॥
कृत्वा च यावकाहारा[7] वर्षमात्रेण शुध्यति ।
यद्यपुत्रा पुत्रिणी चेत् पतेदेवाशु[8] तैः सह ॥ २०४ ॥
सा वै पुत्रैस्तदुद्भूतैश्चण्डालत्वं [9]भजेत वै ।

भ्रान्त्या पुत्रिकादिविवाहे जाते स्वमात्रशुद्धिः

यदि स्वसारं तनयां चिराद्भ्रान्त्यादिकृच्छ्रतः ॥ २०५ ॥
[10]विवहेन्मोहतो ज्ञाते कृत्वा चान्द्रसहस्रकम् ।
चापाग्रयानतः पश्चात् पुटगर्भविधानतः ॥ २०६ ॥
करणाज्जातकादीनां[11] स्वमात्रस्य शुचिर्भवेत् ।
परेषां शूद्रतुल्योऽयं ततस्तां[12] बिभृयादपि ॥ २०७ ॥

1 चान्द्रायणं—क, ख.
2 यस्मात्कुर्वन्—घ.
3 न्यसेत्तत्र—क, ख, घ.
4 रदन्—क, ख.
5 त्रिपदां—क, ख.
6 पुनरुपनयनात्परम्—क, ख, ङ, च.
7 यावकाहारं—घ.
8 पतिदेवा शतैः सह—च ; पतितैवाशु तैः सह—घ.
9 भजेत्परैः—क, ख.
10 विवाहे मोहतो—क, ख, ङ, च.
11 करणात् सूतकादीनां—क, ख.
12 ततस्तान्—ङ, च.

पूर्वधर्मं विनिक्षिप्य तस्यां [1]भक्त्या जपन्वसेत् ।

पुत्रे जाते

[2]यदि तस्यां प्रजायेरंस्तांश्चण्डालेषु विन्यसेत् ॥ २०८ ॥
ततः स्वयं च नित्यं वै यावकाशी चरेद्ध्रुवम् ।
पापप्रख्यापनं कुर्वन् यावज्जीवं हरिं भजन् ॥ २०९ ॥
पुण्यक्षेत्रेषु नियतं[3] [4]वसन् भक्त्या रसामटेत् ।
विवाहितां[5] च विधवां महामोहेन[6] वञ्चकैः ॥ २१० ॥
दत्तां विवाह्य [7]तज्ज्ञात्वा सद्यश्चण्डालतां व्रजेत् ।
तद्दोषशमनायैवं पूर्ववत्तु समाचरेत् ॥ २११ ॥
द्विगुणं निखिलं [8]कृत्यं समुन्नेयं विचक्षणैः ।

एकद्वित्रिचतुःपञ्चवारं विवाहिता

एकद्वित्रिचतुःपञ्चवारं वै या विवाहिता ॥ २१२ ॥
अतिक्षुद्रैककालेषु पापैकबहुलेषु च ।
विज्ञाता चेत्तु तां सम्यक् [9]पृष्ट्वा गत्वा विचार्य च ॥ २१३ ॥
तत्त्वं तस्यास्तु विज्ञाय[10] प्रायश्चित्तं ततश्चरेत् ।
यत्र यत्र च सा गत्वा यं यं वा[11] स्वजनैः सह ॥ २१४ ॥
मायया मोहयामास वञ्चयित्वातिचर्यया ।
तं तं[12] ज्ञात्वा च संभाष्य तत्तद्व्राङ्मूलमप्यलम्[13] ॥ २१५ ॥

[1] शक्तौ—घ.
[2] Line omitted by क, ख and च ; Supplied by ङ and घ
[3] नियतः—क, ख, ङ, च.
[4] वसेद्भक्त्या—क, ख.
[5] विवहेतां—क, ख.
[6] महामोहन—क, घ.
[7] तद्दत्वा—क, ख, ङ.
[8] नित्यं—क, ख.
[9] स्पृष्ट्वा—क, ख.
[10] विज्ञेयं—घ.
[11] हि—च, ङ.
[12] तत्त्वं—क, ख ; दत्तं—च.
[13] अवम् for अलम्—क, ख.

श्रुत्वा पश्चाच्छ्रोत्रियेभ्यः श्रावयित्वाखिलं ततः ।
राज्ञे बन्धुनि चावेद्य प्रायश्चित्तं ततश्चरेत् ॥ २१६ ॥
एतादृशेषु कृत्येषु सा क्षेत्रं प्रभवेद्ध्रुवम् ।
प्रथमोद्वाहकस्यैव परं त्वेषा [1]परा न तु ॥ २१७ ॥
कदाचिद्धर्मकृत्यानां न तस्यापि परस्य वा ।

तदपेक्षया वेश्या विशिष्यते

सा[2] भोगमात्रयोग्यापि वेश्या तस्या विशिष्यते ॥ २१८ ॥
तया चेत्तेषु कृत्येषु सपङ्क्तौ भोजनं तथा ।
सह वा भोजनं दुष्टं यदि पातित्यकारकम् ॥ २१९ ॥
तच्छुध्यर्थं [3]रसायां तु [4]श्वभ्रे संछाद्य धर्मतः ।
खनित्वा याममात्रं वा घटिकाद्वयमेव वा ॥ २२० ॥
तस्मादुद्धृत्य पश्चात्तु जातकादि समाचरेत् ।
तप्तकृच्छ्रसहस्राणि धर्मतश्च समाचरेत् ॥ २२१ ॥
नियतात्मा यावकाशी चापाग्रं [5]तद्भवेच्छुचिः ।
पञ्च स्नानसहस्राणि स्वयं विप्रमुखेन वा ॥ २२२ ॥
समाचरेत्ततः [6]स्वस्य शुद्धो भवति केवलम् ।
न परेषामयं योग्य एवमाह पुरा भृगुः ॥ २२३ ॥
प्रविष्टपरकायेन यदि संयोगमाप्नुयात् ।
त्रिमासयावकाहारा साध्वी शुध्यति नान्यथा ॥ २२४ ॥
प्रविष्टपरवर्ष्माणं विज्ञातं स्वपतिं सती ।
प्रपालयेद्विशेषेण रतिमात्रं [7]न चाचरेत् ॥ २२५ ॥

[1] वरा—ङ. [2] न—क, ख, ङ, च.
[3] च सायान्तं—घ. [4] शुभ्रे—ङ.
[5] तद्व्रतेच्छुचिः—च, ङ. [6] स्वे स्वे—घ. [7] समाचरेत्—च.

काययोरेव संबन्धः पुरा [1]संस्कृतयोः पुरा ।
नात्मनोरस्ति संबन्धो भिन्नकाये न चेत्ततः ॥ २२६ ॥
आत्मान्यकायं [2]स्पृश्येन्न तेन पातित्यमाप्नुयात् ।
सुराणामपि चैवं हि मनुष्याणां तु किं पुनः ॥ २२७ ॥

### अग्राह्यमूर्तयो ग्राह्यमूर्तयश्च

[3]अग्राह्याभेद्यमूर्तीनां [4]ग्राह्यभेद्यशरीरिणाम् ।
देवानां सुमहाभेदस्तारतम्यं च तत्परम् ॥ २२८ ॥
स्पष्टमेव[5] प्रभवति तेनाग्राह्याः सुरास्तु [6]ये ।
[7]ग्राह्यकायसुराणां वै प्रपूज्याः परमाः परम् ॥ २२९ ॥
अधिका वन्दनीयाश्च ते न नीचास्तु तेन वै ।

### अग्राह्यमूर्तिनिवेद्यम्

तन्निवेदितमत्यर्थं न तेषां परिकल्पयेत् ॥ २३० ॥
तेनापराधः सुमहान् प्रभवेन्न [8]तथाचरेत् ।
[9]अग्राह्याभेद्यमूर्तीनां ग्राह्यभेद्यनिवेदितम् ॥ २३१ ॥
अयोग्यं सततं स्याद्धि [10]शूद्रस्येव श्रुतिर्यथा ।
[11]श्रौतस्मार्तक्रियादक्षः पैतृकोद्देशतोऽपि वा ॥ २३२ ॥
निरुप्तमन्योद्देशेन न देवाय निवेदयेत् ।

1 संस्कृतया—घ.
2 पश्येन्न—क, ख.
3 अग्राम्यभेद्यमूर्तीनां—क, ख.
4 ग्राह्यभेद०—क. ख.
5 स्पष्ट एव—क, ख.
6 यम्—क, ख.
7 ग्राह्यकारसुराणां—क, ख ; ग्राह्यकायः सुराणां तु—च.
8 तथाचरेत्—घ.
9 अग्राह्यभेद०—क, ख ; अग्राह्यभेद्य—च.
10 शूद्रस्यैव—ङ.
11 श्राद्ध for श्रौत—क, ख.

### निवेदितेनानिवेदितयोजने

निवेदितेन रुच्यर्थं [1]योजयेन्नानिवेदितम् ॥ २३३ ॥
तथा निवेदितं भूयो लवणं च नियोजयेत् ।
निवेदनादथ पुनस्तदादाय घृतेन वा ॥ २३४ ॥
तैलेन लवणेनापि यत्नेन न नियोजयेत् ।
[2]तदुच्छिष्टं न कुर्वीत [3]तत्करेण न पीडयेत् ॥ २३५ ॥
[4]न खण्डयेन्मिथोऽज्ञानान्न तत्प्रोक्षणमाचरेत् ।
परिषिञ्चेन्नैवमेव तूष्णीमास्ये विनिक्षिपेत् ॥ २३६ ॥
गृह्णीयात्तु [5]तदन्तर्वै न दन्तैरपि पीडयेत् ।
तदेतत्परमं शुद्धं निर्माल्यमतिदुर्लभम् ॥ २३७ ॥
देवानामपि तद्भोज्यं प्रयत्नेनातिभक्तितः ।
तदोपदंशं स्वीकुर्यान्निवेदितमहाक्षणे ॥ २३८ ॥

### भगवत्प्रसादग्रहणे भक्षणविषये

निवेदितस्य हविषो भक्षणे समुपस्थिते[6] ।
आपोशनं न कुर्वीत प्रोक्षणं परिषेचनम् ॥ २३९ ॥
यदि कुर्वीत मोहेन रौरवं नरकं व्रजेत् ।
अन्नं पक्वात् समुद्धृत्य पृथक्पात्रे नियुज्य च ॥ २४० ॥
कृत्वा सुखोष्णं संस्कृत्य पश्चाच्छाखादिभिर्यजेत् ।

### अत्युष्णादिनिवेदने

असह्योष्णं[7] महोष्णं वा [8]पक्वपात्रगमेव वा ॥ २४१ ॥
यो निवेदयते मोहाद्देवाय नरकी भवेत् ।

[1] योजयेन्न निवेदितम्—क, ख.　[2] तदुत्सृष्टं—क, ख.　[3] तं करेऽनेन—क, ख.
[4] सपिण्डयेन्मिथो—क, ख; न पीडयेन्मिथो—ङ., च, घ.　[5] वदन् तद्वै—घ.
[6] समुपस्थितः—क, ख, घ.　[7] असह्योष्णं—क, ख.　[8] पक्वपात्रागमेन वा—ङ.

### निवेदनप्रकारः

तस्मादन्नं समुद्धृत्य पृथक्पात्रे [1]निधाय च ॥ २४२ ॥
कृत्वा यत्नात्सुखोष्णं च राशिं कृत्वाभिघार्य च ।
अतिशुद्धमतिश्रेष्ठं राजयोग्यं सुशोभनम् ॥ २४३ ॥
शाकभक्ष्यफलोपेतं देवाय [2]विनिवेदयेत् ।
तदन्नमपि यत्नेन पश्चाद्दद्यात्समाहितः ॥ २४४ ॥
अप्रोक्ष्यापरिषिच्यैवमप्राणाहुतिपूर्वकम्[3] ।
उच्छिष्टमप्यकृत्वैव यत्नाद्दद्यात्स्वयं शुचिः ॥ २४५ ॥

### स्वीकारप्रकारः

निवेदितानि वस्तूनि न दन्तैः परिघट्टयेत् ।
न [4]खण्डयेच्छब्दयेच्च किं तु तूष्णीं तदम्बुवत् ॥ २४६ ॥
रसवत्फलवद्यत्नात् प्राशयेच्च न शब्दयेत् ।
कण्ठतो वापि यत्नेन काष्ठभूतफलान्यपि ॥ २४७ ॥

### अर्भकेभ्यो दद्यात्

प्रदद्यादर्भकेभ्यो वै न स्वीकुर्यात्स्वयं यदि ।
स्वीकुर्यात्तु[5] तदा नक्तमुपविष्टः [6]शुचिस्थले ॥ २४८ ॥
शब्दानजनयन्नेव तालुदन्तादिभिर्द्दन्[7] ।

### गृहस्थस्य रात्रावुष्णोदकस्नानम्

गृही न रात्रौ स्नायीत यदि स्नायीत वारिणा ॥ २४९ ॥

[1] नियुज्य—च, ङ.  [2] न निवेदयेत्—च, ङ.
[3] अप्रोक्ष्य परिषिच्यैव अप्राणा०—घ; आप्रोक्ष्य परिषिच्यैव आप्राणा०—क, ख.
[4] पिण्डयेत् for खण्डयेत्—क, ख, च, घ.
[5] स्वीकुर्यात्सं—क, ख, च, घ.  [6] शुभस्थले—क, ख.
[7] तालुदन्तादिभिर्यतन्—क, ख, च, ङ; तालुदन्तादिभी रदन्—घ.

उष्णेन भवने [1]विप्रसाक्षितो वह्निसाक्षितः ।
उष्णेन शक्तो न स्नायादशक्तश्चेत्तदाचरेत्[2] ॥ २९० ॥

### अभ्यङ्गम्

अभ्यक्तश्च [3]तथा स्नायाच्छरीरारोग्यहेतवे ।
तत्स्नानं कथितं सद्भिर्न नित्यं तेन नाचरेत् ॥ २९१ ॥
कर्म नैमित्तिकं तस्माद्देवानामपि नार्चनम् ।
यावन्नित्यादिकर्मौघं निर्वर्त्यैव विधानतः ॥ २९२ ॥
पश्चादभ्यञ्जनस्नानं न चेत्काले तु मध्यमे ।
मध्याह्ने [4]संगवे वापि स्नानं कृत्वा तु तादृशम् ॥ २९३ ॥

### माध्याह्निकस्नानम्

माध्यंदिनस्य[5] कृत्यस्य पुनःस्नानं यथाविधि ।
कृत्वा तत्प्रारभेत्कर्म तेनैतत्कर्म नाचरेत् ॥ २९४ ॥
मलापकर्षणार्थाय तद्धि स्नानं प्रकीर्तितम् ।

### क्षुरस्नानम्

एवमेव क्षुरस्नानं कर्मायोग्यं प्रचक्षते ॥ २९५ ॥
क्षुरस्नानात्परं यस्तु पुनः स्नानान्तरं विना ।
करोति वैदिकं कर्म न तत्फलमवाप्नुयात् ॥ २९६ ॥
भवेदपि प्रत्यवायी [6]तथातो नाचरेद्बुधः ।

[1] विप्रः साक्षितो—च, ङ, घ.
[2] तथाचरेत्—ङ.
[3] तदा—क, ख.
[4] संगमे—क, ख, घ.
[5] मध्यंदिनस्य—च.
[6] तथा को न चरेद्बुधः—च, ङ; तदातो न चरेद्बुधः—क, ख.

### प्रातःसायंपर्वादिष्वभ्यञ्जनस्नानम्

नाभ्यञ्जनं प्रकुर्वीत प्रातःसायं न पर्वसु ॥ २५७ ॥
ग्रहणे श्राद्धकालेषु[1] व्रतेषु निखिलेष्वपि ।
पुण्यवैदिकदीक्षासु न नक्तं क्षेत्रतीर्थयोः ॥ २५८ ॥
सुप्त्वा भुक्त्वा रुदित्वा वा दूरं गत्वा पिपासितः ।
अतिक्षुधातुरो रोगी न कुर्वीत कथंचन ॥ २५९ ॥
अकृत्वा नित्यकर्माणि छर्दयित्वातिताडितः ।
शप्तः शपित्वा[2] व्याजेन घातयित्वा [3]नरान् परान् ॥ २६० ॥
हृत्वा धनानि दीनानां न कुर्यात्तत्तु सर्वदा ।
स्वजनान् प्रेषयित्वा च[4] [5]न्यक्कृत्य गुरुबान्धवान् ॥ २६१ ॥
तदवश्यककृत्येषु कर्तव्यत्वेन [6]शास्त्रतः ।
महत्सूपस्थितेष्वेव [7]तान्यकृत्वैव मौर्ख्यतः ॥ २६२ ॥
न कुर्यादेव सहसा विग्रहोद्वर्तनं द्विजः ।

### अभ्यञ्जनस्नानं सोदकुम्भनान्दीश्राद्धयोः

सोदकुम्भश्राद्धमात्रं कृत्वाभ्यञ्जनतः परम् ॥ २६३ ॥
कुर्यादेवेति हारीतो नैवानेनेति वै मनुः ।
[8]स्नातस्नानेन कुर्वीत न श्राद्धानि कदाचन[9] ॥ २६४ ॥

[1] श्राद्धकाले तु—क, ख, च, ङ.
[2] शप्तश्च पीत्वा—क, ख; शप्तो जपित्वा—च.
[3] The portion from No. 3 to No. 4 is omitted by क and ख.
[5] सत्कृत्य—च, ङ. [6] शाश्वतः—घ. [7] तान्यकृत्वैव—क, ख.
[8] स्नाने स्नाने न—क; स्नानस्नानेन—ख.
[9] च adds a line after this : नान्दि ताभ्यां प्रकुर्वीत न श्राद्धानि कदाचन ।
नान्दि etc.

नान्दिं ताभ्यां [1]प्रकुर्वीतानुकल्पेनैव तत्स्मृतम् ।
स्नानमभ्यञ्जनं स्नानमशक्तस्य कदाचन ॥ २६५ ॥
सोदकुम्भस्य नान्द्याश्च [2]कर्तुः संपद्यते किल ।

### क्रोशस्थितनदीस्नानाच्छ्राद्धम्

क्रोशस्थितनदीस्नानान्न पित्रोः श्राद्धमाचरेत् ॥ २६६ ॥
महादवभृथाच्चापि शावाद्वार्षावगाहतः ।
तदङ्गस्नानतः सद्यः श्राद्धाख्यं कर्म तच्चरेत् ॥ २६७ ॥

### संकल्पः

कर्ममात्रस्य सर्वत्र प्राणानायम्य मन्त्रतः ।
करिष्य इति वागुक्तिरूपं संकल्पमाचरेत् ॥ २६८ ॥
न संकल्पं विना कर्म नित्यकाम्यादिकं चरेत् ।
स मानसः स्यात्संकल्पः कर्तव्यो वाचिकः परः ॥ २६९ ॥
यक्ष्य इत्येतद्वाक्येन तथा प्राह श्रुतिः शिवा ।
देशः कालश्च संकल्पे वक्तव्यौ तत्र चेत्पुनः ॥ २७० ॥
तिथिः काल इति प्रोक्तो व्यत्यासे तस्य कर्म [3]तत् ।
नष्टमेव भवेत्सद्यस्तस्मात्तत्तु पुनश्चरेत् ॥ २७१ ॥

### पितृश्राद्धव्यत्यासे पुनश्चरेत्

एकस्मिन्नेव दिवसे पित्रोः श्राद्धमुपस्थितम् ।
तत्क्रमेणैव [4]कर्तव्यं व्यत्यासे तु पुनश्चरेत् ॥ २७२ ॥
मोहादतद्दिनकृतश्राद्धं चापि पुनश्चरेत् ।

[1] प्रकुर्वीत पुकल्पेनैव—ङ ; प्रकुर्वीत सकल्पेनैव—च.
[2] कर्तुं—क, ख, ङ. [3] तु—क, ख. [4] कुर्वीत—क.

### शून्यतिथिकृतं पुनश्चरेत्

तथा शून्यतिथौ यन्नात्कृतं चापि पुनश्चरेत् ॥ २७३ ॥
सूतकान्ते [1]शून्यतिथिदोषोऽयं श्राद्धकर्मणः ।
कदाचिन्न भवत्येव [2]तस्मात्तत्रैव तच्चरेत् ॥ २७४ ॥

### पितृश्राद्धात्परं कारुण्यश्राद्धम्

[3]पितुः श्राद्धात्परं श्राद्धं कारुण्यानां समाचरेत् ।
तदन्यथाकृतं [4]तच्चेत् परेद्युस्तत्पुनश्चरेत्[5] ॥ २७५ ॥
निमित्तग्रहणश्राद्धं कृत्वान्नेनापि तद्दिनम् ।
भूयः सम्यक् प्रकुर्वीत भिस्सयैव न चान्यथा ॥ २७६ ॥

### मातृपितृश्राद्धमेकदिनेऽन्नेन

पित्रोर्मृताहं सततमपि कृच्छ्रगतो नरः ।
अन्नेनैव प्रकुर्वीत नामाद्येन कदाचन ॥ २७७ ॥
ग्रहणादिषु शक्तश्चेद्भिस्सया तानि चाचरेत् ।
न चेदामादिना शुद्धस्तद्धर्मैरखिलैर्वृतः ॥ २७८ ॥
ग्रहे मुहूर्तद्वितये[6] गतेऽन्नश्राद्धमाचरेत् ।
अपि शक्तोऽपि तन्न्यूने तादृक्छ्राद्धं [7]न चाचरेत् ॥ २७९ ॥

### चाक्रिकश्राद्धम्

चाक्रिकं ग्रहणं मुख्यमायनं तदमुख्यकम् ।
पुष्पवन्मण्डलसममध्यभागप्रपीडितम् ॥ २८० ॥

[1] शून्यतिथिर्दोषोऽयं—क, ख; शून्यतिथौ दोषोऽयं—च.
[2] तस्मादत्रैव—च.
[3] पितृश्राद्धात्—घ.
[4] चेत्तु—च, ङ.
[5] परेद्युस्तत्तु नाचरेत्—क, ख.
[6] द्वितयगते—क, ख, ङ, च.
[7] समाचरेत्—ङ, च.

यन्नीललक्ष्मपृथुलं[1] वर्तुलं तत्त्रियामगम् ।
तच्चाक्रिकमिति प्रोक्तं ग्रहणं पितृतृप्तिदम् ॥ २८१ ॥
[2]तच्च पञ्चशताब्दानामेकदा वै भविष्यति ।

ग्रहणे भोजननिषेधः, वृद्धबालातुराणां न

ग्रहस्य चाक्रिकस्यास्य पूर्वं यामत्रयं नरैः ॥ २८२ ॥
भोजनं नैव कर्तव्यं वृद्धबालातुरान्विना ।
अपराह्णे न मध्याह्ने मध्याह्ने न तु [3]संगवे ॥ २८३ ॥
[3]संगवे तु न तु प्रातः पृथुकानां तु केवलम् ।
स्तन्यपाने न दोषोऽस्ति तत्काले केवलेऽपि वा ॥ २८४ ॥
यवाग्वाः पयसो वापि [4]पानीयस्याशरत्समम् ।
नियमोऽयं[5] प्रकथितो न तदूर्ध्वं तु तच्चरेत् ॥ २८५ ॥
अयनग्रहणे मुख्ये पौनःपुन्यगते सकृत् ।
[6]कोणैकदेशसंस्पृष्टे तन्न्यूनसमयस्थिते ॥ २८६ ॥
[7]यामद्वयं सार्धयामद्वयं यामत्रयं तथा ।
सार्धयामत्रयं यामचतुष्टयमिति क्रमात् ॥ २८७ ॥
अधिकारप्रभेदेन[8] भोजनस्य [9]निरूपणम् ।
यदेतत्तस्य सर्वस्य प्रवदामि [10]विनिर्णयम् ॥ २८८ ॥
तत्कालाजीर्णराहित्ये हृदयं तन्निबोधत ।

[1] ०लक्ष्मणपृथुलं—क, ख, घ.
[2] च omits the following verses here which are found later on.
[3] संगमे—ङ, च.
[4] पानीयस्याश्शरत्समः—घ ; पानीयस्याश्शरत्समम्—क, ख, ङ, च.
[5] नियमो यः—च, ङ, घ.
[6] नोऽहैकदेशसंस्पृष्टे—घ.
[7] ङ and च add न before this line.
[8] अधिकाराप्रभेदेन—क, ख, च.
[9] निरूपिणाम्—ख, घ.
[10] बिनिश्चयम्—घ.

एवं स्थिते पुनर्वच्मि यामतः सार्धयामतः ॥ २८९ ॥
जीर्णशक्तिमतो[1] नुश्चेत्तत्काले क्षुद्भवेद्यदि ।
न[2] दोषः कथितः सद्भिः कदाचिद्दैवयोगतः ॥ २९० ॥
अजीर्णः स्यात्तदा दोषः सुमहान् प्रभवेदपि ।
तस्माद्यामद्वयं सर्वैर्भुक्तिस्त्याज्या विचक्षणैः ॥ २९१ ॥

अत्यन्तातुरादीनाम्

विशेषः कोऽपि भूयश्च प्रोच्यते [3]सुमहान् परः ।
रोगिणोऽप्यतिमात्रस्य[4] चौषधातिक्षुदश्नतः ॥ २९२ ॥
क्रूरग्रहातितप्तस्य[5] पिशाचावेशिनस्तथा ।
वश्याकर्षणविद्वेषस्तम्भनोच्चाटनादिभिः ॥ २९३ ॥
पीडितस्य विशेषेण मूर्छितस्यातिताडनैः ।
तत्कालभक्षणमपि न दुष्यति कदाचन ॥ २९४ ॥
अत्युत्क्रान्तिप्रवृत्तस्य [6]चिरत्यक्तान्धसस्तथा ।
अप्राशनोत्पन्नमृतिसंशयस्य विशेषतः ॥ २९५ ॥
तत्कालभक्षणावृत्तिर्न दोषाय भवेदयम् ।
सर्वेषामपि वर्णानां सर्वाश्रमनिवासिनाम् ॥ २९६ ॥
[7]मुख्यो साधारणो धर्मस्तत्कालाजीर्णशून्यता[8] ।
[9]यामत्रयादिकाः कालास्तत्र तत्र प्रचोदिताः ॥ २९७ ॥
तैस्तैस्ते निखिला ज्ञेया [10]नृभेदेन विवक्षिताः ।

[1] गतो for मतो—च.
[2] स for न—ङ.
[3] तु महान्—क, ख, च.
[4] अतिमूर्तस्य—क, ख ; अतिमूत्रस्य—ङ, च.
[5] तृप्तस्य for तप्तस्य—ङ.
[6] चिरत्यक्तं धनुस्तथा—क, ख, ङ, च.
[7] मुख्याः साधारणा धर्माः—घ.
[8] शूलता for शून्यता—घ.
[9] यामत्रयात्मिकाः—घ.
[10] स्वभेदेन—क, ख, च.

### ग्रस्तास्तके सकामिनिष्कामिनोः

सोमं ग्रस्तास्तगं सूर्यमपि वा शास्त्रदृष्टितः ॥ २९८ ॥
मुक्तं ज्ञात्वा ततः स्नात्वा निष्कामो भोजनं चरेत् ।
शुभ्रांशुचण्डांशुलोककामी चेन्न तु भोजनम् ॥ २९९ ॥
चरेदेव न संदेहस्तल्लोकाकामिनः परम् ।
दोषाय भोजनत्याग एवमाह प्रजापतिः ॥ ३०० ॥

### अग्निहोत्रम्

विहितस्य परित्यागादग्निहोत्रस्वरूपिणः[1] ।
पीतमातृस्तनरसो जनकाशौचमोचने ॥ ३०१ ॥
सहिष्णुर्न भवेत्तस्मात्तत्पूर्वं तत्समाचरेत् ।

### दत्तपुत्रः

आराद्व्यक् सोदरसुतस्तर्णकः कर्मवर्जितः ॥ ३०२ ॥
कृतकर्मत्रयकृतो यो दत्तः प्रवरः स्मृतः ।

### मातापितृभ्यां दानं ग्रहणं च

दद्यातां दम्पती पुत्रं गृह्णीयातां च दम्पती ॥ ३०३ ॥
तयोरेवाधिकारोऽयं तद्दाने तत्प्रतिग्रहे ।
[2]ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ॥ ३०४ ॥
सगोत्रेष्वथवा कार्यो ह्यन्यत्र तु न[3] कारयेत् ।
असंस्कृतो दत्तसूनुः पितुश्चाप्यकृतक्रियः ॥ ३०५ ॥
न तद्धनमवाप्नोति तद्वृत्तौ का कथा पुनः ।

[1] अग्निहोत्रस्य रूपिणः—क, ख, च.
[2] च and ङ omit the following two lines here.
[3] न तु for तु न—क, ख, ङ.

[1]जातकर्मादिना तस्य पुत्रत्वं नान्यथा मतम् ॥ ३०६ ॥
मौञ्ज्यन्तेनातिहर्षेण सर्वमत्या समन्वतः ।
पुत्रो ज्ञातिमतो दत्तः कृतसर्वपितृक्रियः ॥ ३०७ ॥
यदि स्वयं तदा सर्वां तद्वृत्तिं लभते पराम् ।
सर्वस्य प्रतिमन्त्रस्य पितृहेतुप्रपाठनात् ॥ ३०८ ॥
दत्तस्य तद्भूलाभः स्यात्तत्पूर्वं सा न सिध्यति[2] ।
हिरण्यकश्यामन्त्राणां पठनात्तत्त्रयं पुनः ॥ ३०९ ॥
प्रदूरीकृत्य तज्ज्ञातीनवशादेति चाखिलम् ।
दत्तसूनुः पित्रान्येन संस्कृतो यदि तद्भृतः ॥ ३१० ॥
तदा तु तद्धनं सर्वं ज्ञातिसाधारणं भवेत् ।
स्वयमेव पितुर्दत्तः कर्म कुर्यात्प्रयत्नतः ॥ ३११ ॥
तद्धनं तु न चेत्सद्यस्तज्ज्ञातिगतमेव वै ।
दत्तोऽयमसगोत्रश्चेत्सदा दुर्बल एव वै ॥ ३१२ ॥
भवेदेव न संदेहः शास्त्रेऽमुत्र परत्र च ।[3]
[4]यदि जामी तत्र भवेत्तन्मुखं नावलोकयेत् ॥ ३१३ ॥

अवश्यं पुत्रसंग्रहः कर्तव्यः

यथाकथंचित्पुत्रस्य संग्रहः कार्य एव वै ।
दौर्बल्ये स्वस्य संजाते धर्मज्ञेन महात्मना ॥ ३१४ ॥
जलबुद्बुदसंकाशं वर्ष्मैतत्कथितं बुधैः ।

[1] घ omits the following four lines.

[2] तत्तत्पूर्वं न सिध्यति—क, ख.

[3] च and ङ add here two lines omitted before. See footnote 2 page ३८.

[4] Line omitted by च and ङ.

न हि [1]प्रमाणं जन्तूनामुत्तरक्षणजीवने ॥ ३१५ ॥
तस्मादात्महितं नित्यं [2]चिन्तयन्नेव तच्चरेत् ।

अपुत्रस्य लोको नास्ति

नापुत्रस्य तु लोकोऽस्ति पुत्रिणस्तु त्रिविष्टपम् ॥ ३१६ ॥
ब्रह्मलोकादयो लोकाः स्वाधीना एव सर्वदा ।

पुत्रवानग्निमान्

पुत्रवानग्निमान्नित्यं पुत्रवान् श्रोत्रियः स्मृतः ॥ ३१७ ॥
पुत्री साक्षाद्ब्रह्मविच्च पुत्रवानेव भाग्यवान् ।
ये ये धर्माः स्वेन ते ते पुत्रेणैतेन तत्क्षणात् ॥ ३१८ ॥
संपादिता भविष्यन्ति नात्र कार्या विचारणा ।
न[3] पुत्रवानपत्नीकः[4] किं तु सोऽयमपुत्रवान् ॥ ३१९ ॥
अनग्निको न पुत्री[5] स्यादपुत्रोऽनग्निमान् स्मृतः ।
[6]पुत्रेण स्थावरं दानं[7] फलवद्दानमेव च ॥ ३२० ॥
[8]यद्यल्लोके [9]महत्सर्वैर्दुर्लभं [10]पुत्रिणी चरेत् ।
पुत्रयत्नं सदा [11]कुर्याद्वैदिकं लौकिकं शुभम् ॥ ३२१ ॥
तस्मादृतुमतीं भार्यां सदा [12]स्वस्थो न लङ्घयेत् ।
लङ्घयेद्यदि तां मूढो भ्रूणहत्यामवाप्नुयात् ॥ ३२२ ॥

[1] प्रमादो—ङ.
[2] चिन्तयेन्नैव—ङ.
[3] स for न—च, ङ, घ.
[4] पुत्रवान् सपत्नीकः—घ.
[5] पुत्रः—क, ख.
[6] पुत्रिणे—क, ख, घ.
[7] स्थानं—ङ.
[8] अद्य लोके—क, ख.
[9] महत्सद्वै—क, ख, ङ, च.
[10] पुत्रिणे—ङ, च, घ.
[11] कुर्याल्लौकिक वैदिकं—ङ, घ.
[12] स्वस्थां—ख.

ऋतुस्नातदिने सोऽयं युवा श्रोत्रिय एव वा ।
न कव्याय भवेदेव पुत्रवान् यदि तद्भवेत् ॥ ३२३ ॥

जातमात्रे पुत्रमुखवीक्षणम्

पुत्रेण जातमात्रेण ऋणान्मुक्तो भवेदयम् ।
तस्मात्पुत्रस्य जातस्य पश्येत्सद्यो मुखं पुमान् ॥ ३२४ ॥
न पश्यतस्तल्लपनमृणान्मुक्तिर्न जायते ।
येन केन प्रकारेण तस्मात्कुर्वीत मानवः ॥ ३२५ ॥
पुत्रसंपादनं धीमान् दुर्बलश्चेद्विशेषतः ।

वृत्तिदत्तादयः

वृत्तिदत्तं कल्पयेद्वा मौञ्जीदत्तमथापि वा ॥ ३२६ ॥
विवाहदत्तमथवा यज्ञदत्तं न चेत्परम् ।
वृत्तिदत्तः कुलान्यष्टौ मौञ्जीदत्तस्तु षोडश ॥ ३२७ ॥
विवाहदत्तो द्वात्रिंशद्यज्ञदत्तस्तरिष्यति ।
[1]चतुःषष्टिकुलान्यस्य लीलया सद्य एव वै ॥ ३२८ ॥
अपुत्रदत्तवृत्त्या यः प्राणवृत्तिं चरत्यलम् ।
वृत्तिदत्त इति ख्यातस्तनयः पुण्यलोककृत् ॥ ३२९ ॥
धनतो यस्य यो लोके ह्युपनीतो भवेदहो ।
स मौञ्जिदत्त इत्याख्यस्तनयस्तु ततोऽधिकः ॥ ३३० ॥
एवमेव भवेदन्यस्तनयः परलोकदः ।
विवाहदत्तसंज्ञः स्यात्ततोऽपि द्विगुणः परः ॥ ३३१ ॥
ततोऽधिको यज्ञदत्तस्तनयः पितृवल्लभः ।
त एते तनयाः सर्वे तत्तत्कर्मैकपूर्तये ॥ ३३२ ॥

[1] चतुःषष्टिकलाख्यस्य—क, ख, घ.

कृतेन धनदानेन भवन्ति किल नान्यथा ।
तस्मात्सन्तः किलैतेषां कर्मणामेकतो धनम् ॥ ३३३ ॥
न गृह्णन्ति महात्मानो परलोकदिदृक्षवः ।
कणशः कणशः सद्भ्यः प्रतिगृह्य ततस्ततः ॥ ३३४ ॥
शनैः शनैश्च कालेन महता तानि चाचरेत् ।
एवं कृतेषु तेष्वेषु महत्सु किल कर्मसु ॥ ३३५ ॥
नैकस्य तनयास्ते स्युस्तस्मात्तेषु तथाचरेत् ।

अन्येषु सुतग्रहणम्

[1]दुर्लभे तु सगोत्रेषु सपिण्डेषु सुते[2] यदि ॥ ३३६ ॥
सुतं बन्धुषु वान्येषु गृह्णीयादन्यजातिषु ।

सवर्णेषु ग्रहणम्

सवर्णेष्वेव कुर्वीत नासवर्णेषु तद्ग्रहम् ॥ ३३७ ॥
असवर्णेषु तत्कुर्वन्[3] सद्यः पतति वर्णतः ।

असगोत्रस्वीकृतौ

गृहीत असगोत्रश्चेत्तनयः पुरुषत्रयम् ॥ ३३८ ॥
कृतार्थतां प्रापयति तत्कुलं तदनन्तरम् ।
संकीर्णमवशाद्याति यत्नतश्चेत्तरिष्यति ॥ ३३९ ॥
असगोत्रस्तु न ग्राह्यो गृहीतुः[4] स्यात्स एव हि ।
दत्तो रिक्थमवाप्नोति सन्ततिर्दातुरेव हि ॥ ३४० ॥
तस्माद्दत्तसुतः स्वस्वतनयानुद्धवान् ततः ।
जनकस्यैव गोत्रे तान् [5]मौञ्ज्यां मन्त्रैः प्रवेशयेत् ॥ ३४१ ॥

[1] दुर्लभेषु—क, ख, च, घ.
[2] सुतो—क, घ.
[3] तत्कुर्यात्—क, ख, घ.
[4] गृहीतः—क, ख, घ.
[5] मौञ्ज्या—च, ङ.

यदि दत्तस्तनयान् स्वगोत्रे न प्रवेशयेत् ।
दत्तजो[1] वाथ तज्जो वा तद्गोत्रद्वयजास्तु ते ॥ ३४२ ॥

विवाहे गोत्रद्वयत्यागः

एवं सत्यत्र जनने जातानां पाणिपीडने ।
समागते तदा सम्यग्यत्नाद्गोत्रद्वयं त्यजेत् ॥ ३४३ ॥
[2]तद्गोत्रद्वययुक्त्यर्थज्ञानाय किल तत्परम् ।
तज्जातानां विवाहस्य तदार्षद्वयमाचरेत् ॥ ३४४ ॥

अभिवन्दनादौ द्विगोत्रत्वम्

नित्याभिवन्दने सन्ध्यावन्दने काम्यवन्दने ।
कृत्स्नार्षेयं[3] त्वेकगोत्रे परस्मिन्नपि गोत्रके ॥ ३४५ ॥
स्वीकृत्यार्षद्वयं तेन योजयित्वा ततः परम् ।
एकमेव वदेद्गोत्रमेकद्वित्र्यार्षकं [4]तथा ॥ ३४६ ॥
पञ्चसप्तार्षकं [5]वैतन्नवैकादशकार्षकम् ।
गोत्रमेकं भवेदेवं त्रयोदशकमार्षकम् ॥ ३४७ ॥
एवं पञ्चदशार्षं च गोत्रं तत्प्रभवेदपि ।
एवं जातानि गोत्राणि[6] दत्तावृत्त्युद्भवानि वै ॥ ३४८ ॥
वर्तन्ते भूतले तस्माद्गोत्रिणस्तान्विचार्य च ।
पृष्ट्वा[7] तत्संशयस्त्याज्य एतावन्त्येव भूतले ॥ ३४९ ॥
गोत्राणि[8] शास्त्रसिद्धानि [9]चैकार्षेयाणि कानिचित् ।

1 दत्ततो—क, ख.  2 तद्गोत्रद्वयमुक्त्यर्थं ज्ञानाय—क, ख, ङ, च.
3 कृतार्षेयं—च, ङ.  4 यथा—क, ख, ङ.
5 च for वा—क, ख.  6 गोत्रेण—क, ख.
7 दृष्ट्वा—ध.  8 गोत्राणां—क, ख.  9 चैकार्थे यानि—च.

[1]द्व्यार्षेयाणि [2]त्र्यार्षेयाणि पञ्चार्षेयाणि सन्ति हि ॥ ३९० ॥
एतावन्त्येव सर्वत्र शास्त्रसिद्धानि नेतरत् ।
[3]आद्यदत्तैकतद्दत्तपारम्पर्येण केवलम् ॥ ३९१ ॥
दृश्यन्ते ब्राह्मणाः [4]सप्तदशार्षेयावधीतरे ।

## दत्तजादीनां पूर्वगोत्रम्

तस्माद्दत्तजपुत्रांस्तान् पूर्वगोत्रे प्रवेशयेत् ॥ ३९२ ॥
विना प्रवेशं यदि ते परं प्राप्तैकगोत्रिणः ।
यदि स्युर्मोहतः पश्चात्पूर्वं तज्जनकस्य च ॥ ३९३ ॥
गोत्रं वर्ज्यं [5]विवाहादावेवं सत्यत्र कालतः ।
अज्ञात्वा पूर्ववृत्तान्तं गोत्रे तज्जनकस्य च ॥ ३९४ ॥
[6]विवहेरन् महानर्थः प्रभवेत्किल केवलम् ।
पूर्ववृत्तेऽथ विज्ञाते तां त्यक्त्वा मातृवत्तु ताम् ॥ ३९५ ॥
पालयेदेव [7]धर्मेण पश्चात्कृच्छ्रत्रयं चरेत् ।
तद्दोषपरिहाराय तत्र जातांस्तु चेत्ततः ॥ ३९६ ॥
चण्डालेष्वेव निष्कम्पं योजयेदिति निर्णयः ।
असगोत्रसुतं तस्मान्न स्वीकुर्यात्कथंचन ॥ ३९७ ॥
बुद्धिमान् धर्मवित्किं तु [8]पौर्वापर्यविशेषवित् ।
सगोत्रेष्वेव कुर्वीत शास्त्रतः पुत्रसंग्रहम् ॥ ३९८ ॥

[1] द्व्यार्षेयाणि—च, ङ; द्व्यार्षेयाणि—क, ख, घ.
[2] त्र्यार्षेयाणि—क, ख; त्र्यार्षाणि—ङ, च, घ.
[3] अद्य for आद्य—क, ख.
[4] सप्तदशार्षेया महीतले—क.
[5] विवाहाय एवं—क, ख.
[6] विवाहे तन्महानर्थः—च.
[7] धैर्येण—ङ.
[8] कार्यापत्यविशेषवित्—क, च.

### भ्रातृजेषु न विवाहहोमादिः

भ्रातृजेषु[1] विवाहो न न [2]स्वीकारश्च सत्क्रिया ।
न होमादिश्च कार्यो वै वाङ्मात्रेणैव पुत्रता ॥ ३५९ ॥

### भ्रातृपुत्रादिपरिग्रहः

भ्रातृपुत्रेषु तिष्ठत्सु नान्यं ज्ञातिजनं तथा ।
न स्वीकुर्याद्दूरगं वा[3] स्वीकृतश्चोर एव सः ॥ ३६० ॥
पुत्रग्रहणकाले तु तत्पित्रोर्मानसं तदा ।
तोषयित्वा प्रदानाद्यैर्भविष्यत्कालकृत्यकम् ॥ ३६१ ॥
कृत्वा च शपथं बाढं बन्धुराजादिभिर्जनैः ।
तत्पुत्रस्य च मर्यादा चैवमित्यपि वै पुनः ॥ ३६२ ॥
जातेऽपि चौरसे भूयः करोम्येवं न संशयः ।
दृढयित्वा स्वयं पश्चात् स्वीकुर्यात्तनयं ततः ॥ ३६३ ॥
न चेद्दोषो महानेव भविष्यति न संशयः ।

### स्वीकृत्यनन्तरमौरसोत्पत्तौ

स्वीकृत्य परपुत्रं यः संजाते त्वौरसे पुनः ॥ ३६४ ॥
पुरोक्तान्यन्यथाकृत्वा [4]मोहात्तदहितं चरन् ।
प्रलपंस्तदुरुक्तानि मम मास्त्वयमद्य वै ॥ ३६५ ॥
[5]वदेत्पापी महाक्रूरस्तेन भूर्भारवत्यलम् ।
तं देशाद्धार्मिको[6] राजा ताडयित्वा [7]प्रवासयेत् ॥ ३६६ ॥

[1] भ्रातृजासु—च. [2] स्वीकार्या च—च. [3] च—क, ख.
[4] महत्तदहितं—क, ख. [5] वदेद्भ्रातिमहाक्रूरः—घ.
[6] तद्देशाधार्मिको—क, ख, च. [7] तमानययेत्—क.

सर्वस्वं तस्य गृह्णीयात्तस्मिन् जनपदे न चेत् ।
न वर्षेत्किल पर्जन्यः राष्ट्रक्षोभोऽपि जायते[1] ॥ ३६७ ॥

पुत्रप्रदानसमये यदुक्तं तत्कर्तव्यम्

[2]पुत्रप्रदानसमये तत्पित्रोर्ग्राहकेण या ।
वागुक्ता तां ततः काले तिरस्कर्तुं न शक्यते ॥ ३६८ ॥
तद्बन्धुभिस्तेन राज्ञा तैर्जनैर्दातृदापकैः ।
तद्भार्याभिस्तत्तनयैर्येन केनापि वा पुनः ॥ ३६९ ॥
पुत्रप्रदानसमये[3] प्रोक्तवाक्यं तु तत्परम् ।
अल्पं महदशक्यं वा शक्यं वा तन्न लङ्घयेत् ॥ ३७० ॥
स्वकार्याय[4] पुरा प्रोक्त्वा जनानां पुरतो [5]दृढम् ।
[6]इच्छंस्तदन्यथयितुं यतते यस्तु [7]या जडा ॥ ३७१ ॥
ऊर्ध्वं लोकं[8] न यातो वै [9]भ्रूणहत्यामवाप्नुतः ।

भर्तुः पितुर्वा वाक्यातिक्रमे

स्वपुत्रहितमिच्छन्त्यो भर्तृवाक्यं पुरोदितम् ॥ ३७२ ॥
तिरस्कुर्वन्ति सहसा ता वै निरयभाजिनः ।
भर्तुः पितुर्वा यद्वाक्यं तदा पूर्वमुदीरितम् ॥ ३७३ ॥
पत्नी पुत्रोऽथवा मौर्ख्यादनृतं मौर्ख्यचोदितम् ।

[1] अभिजायते—क, ख.
[2] The following four lines are omitted by ङ and च.
[3] ०समयप्रोक्तं—क, ख, च.
[4] स्वीकार्या या—च.
[5] धृतम्—च.
[6] इतः for इच्छन्—च.
[7] ये जडाः—क.
[8] ऊर्ध्वलोकं—ख, ङ, घ.
[9] च omits the following quarter verse, the next four lines 'विरोधि तत्' in the fifth line.

दुःश्रुतं परुषं [1]क्रूरमस्मत्कार्यविरोधि[2] तत् ॥ ३७४ ॥
नाप्यकुर्म[3] स्वीकरणमिति [4]वक्तॄन् दुरात्मनः ।
न्यक्कृत्य वाचा धिक्कृत्य ताडयित्वा कपोलयोः ॥ ३७५ ॥
शीघ्रं प्रवासयेद्देशात् साधून्[5] सम्यक् प्रपूजयेत् ।

### भ्रातृपुत्रस्वीकृतौ दत्तस्य समांशः

स्वीकृतभ्रातृसूनोश्च पश्चाज्जातौरसस्य च ॥ ३७६ ॥
समभागः सदा प्रोक्तस्तदन्यस्य पुनर्यदि ।

### सगोत्रस्य तुरीयभागः

तुर्यभागः सगोत्रादेरेवमाह पितामहः ॥ ३७७ ॥
औरसो वयसा न्यूनो ज्येष्ठ एव न संशयः ।
नष्टे तु पालके ताते स्वीकृतो वयसाधिकः ॥ ३७८ ॥
उपनीतः कलत्री वा जातपुत्रोऽथवा यजन् ।
[6]यत्नाच्च तं नोपनयेद्दत्तो जातं तदौरसम् ॥ ३७९ ॥
कनिष्ठो धर्मतो [7]दत्तो ह्यप्ययं वयसाधिकः ।
न्यूनोऽपि वयसा ज्येष्ठः औरसो नात्र संशयः ॥ ३८० ॥

### दत्तेनौरसे उपनीते

तस्माद्दत्तः स्वयं पश्चाज्जातं धर्मेण पूर्वजम् ।

[1] घोरं for क्रूरं—घ.
[2] असत्कार्यविरोधि for अस्मत्कार्यविरोधि—क, ख, ङ, च.
[3] नाथ कुर्म—घ.
[4] वक्तुः—ङ, च.
[5] साधु—च, ङ.
[6] यत्नान्न तं नोपनयेद्—All Mss.
[7] दत्तः अप्ययं—All Mss.

धर्मन्यूनो नोपनयेद्यदि मोहेन[1] तादृशम् ॥ ३८१ ॥
प्रमादेन ह्युपनयेत् स्यातां तौ पतितौ ध्रुवम् ।
न तयोर्द्वन्द्वभावोऽस्ति[2] कदाचित्तु परस्परम् ॥ ३८२ ॥

मृतभार्ययत्यादिपुत्रग्रहणम्

मृतभार्यो यतिर्वर्णी विश्वस्ता दूरभर्तृका[3] ।
पुत्रं न प्रतिगृह्णीयाद्दूरभार्योऽपि[4] सूतकी ॥ ३८३ ॥
अधिकारो मिलितयोर्दम्पत्योरुभयोरपि ।
कदाचिन्न पृथक्त्वेन तद्दाने तत्प्रतिग्रहे ॥ ३८४ ॥
सूतिप्रजननस्थानापन्नयुग्मद्वयस्य चेत् ।
वस्तुनो मेलनं पुत्रदानं तद्ग्रहणं भवेत् ॥ ३८५ ॥
[5]सूतिप्रजननस्थानयुग्मद्वन्द्वमनःसुखम् ।
अचञ्चलं स्थिरं तुष्टं चेन्मनस्तच्चरेन्ननु ॥ ३८६ ॥
दम्पती दम्पतीचित्तं तुष्टं कृत्वाम्बरादिभिः ।
कृत्वा च शपथं गाढं भविष्यत्कार्यहेतवे ॥ ३८७ ॥
साक्षिणां पुरतो नूनं देवब्राह्मणसन्निधौ ।
राज्ञे बन्धुनि चावेद्य गृह्णीयातां सुतं ततः ॥ ३८८ ॥

तत्काले प्रतिज्ञाय तदकरणे

शपथानन्तरं कालान्मर्यादा या कृता पुरा ।
[6]नरांस्तानुल्लङ्घयत राजा राष्ट्रात्प्रवासयेत् ॥ ३८९ ॥

[1] नोपनयेदतिमोहेन—च.
[2] तयोर्वन्ध्यभावोऽस्ति—ङ.
[3] विश्वस्तादूरभर्तृकौ—घ.
[4] अथ for अपि—घ.
[5] Line omitted by घ.
[6] सर्वान् for नरान्—घ.

पत्नीषु सुतस्वीकारकाले या सन्निहिता सा माता, अन्या सपत्नीमाता

सुतस्वीकरणे याऽऽरात्स्थिता[1] साऽम्बास्य वै भवेत् ।
सापत्नी जननी दूरस्थिता भवति नान्यथा ॥ ३९० ॥

अन्ये मातृमातामहादयः

द्वे तिस्रो वा स्थिताश्चेत्तु तदारादेव केवलम् ।
पुत्रग्रहणतुष्टाश्चैव भर्त्रा साकं हृदा[2] तया ॥ ३९१ ॥
निखिला मातरो ज्ञेया बहुमातृक एव सः ।
तदानीं स्वीकृतसुतो नात्र कार्या विचारणा ॥ ३९२ ॥
तासां च पितरः सर्वेऽप्यस्य मातामहाः स्मृताः ।
सर्वश्राद्धेष्वनेनाथ सर्वान् मातामहान् क्रमात् ॥ ३९३ ॥
एकस्मिन्नेव तत्पिण्डे योजयेद्वा पृथक्तु वा ।
[3]पिण्डान्वा निक्षिपेत्तेषां [4]स्मर्तॄणामत्र केवलम् ॥ ३९४ ॥
वचनानां समत्वेन विकल्पस्तुल्य एव हि ।
यथारुचि प्रकुर्वीत यथा वा पुरतः कृतम् ॥ ३९५ ॥
तथैव पश्चात्कुर्वीत सर्वत्रैवं [5]हि निर्णयः ।

सपत्नीपिता न मातामहः

सपत्नीजननीतातो न तु मातामहो भवेत् ॥ ३९६ ॥

सपत्नीमातृतर्पणम्

सपत्नीजननी नित्यतर्पणे [6]द्व्यञ्जली लभेत् ।

[1] This quarter verse is omitted by क and ख.

[2] यथा for हृदा—ख.

[3] पिण्डेनापि क्षिपेत्तेषां—क, ख; पिण्डान्वा निक्षिपेत्तेषां—ङ, च; पिण्डानां निक्षिपेत्तेषां—घ.

[4] मातृणामत्र—ङ, च.

[5] विनिर्णयः for हि निर्णयः—क, ख.

[6] द्व्यञ्जलिर्भवेत्—ङ, च.

[1]स्वमातृवत्त्यूञ्जलिं सा कदाचिदपि नो लभेत् ॥ ३९७ ॥
[2]पुनर्विवाहितेनैवं तद्भार्या द्व्यञ्जलिं लभेत् ।
अपुत्रा वा सपुत्रा वा तत्समा [3]सा प्रकीर्तिता ॥ ३९८ ॥

### तस्या औपासनाग्नौ श्राद्धम्

तस्या औपासने श्राद्धमग्नौ कुर्यान्न लौकिके ।
यदि कुर्यात्प्रमादेन कुलं तस्य विनश्यति ॥ ३९९ ॥

### पत्न्या अग्निः

यतः [4]पत्नीमृतदिनं पितृनाशदिनेन वै ।
तुल्यत्वेनैव कथितं तस्याः को वा विमूढधीः ॥ ४०० ॥
लौकिकाग्नौ प्रकुर्वीत स्वसमाया विचक्षणः ।
सा विद्यमाना भार्यैव मृता चेन्मातृवर्गगा ॥ ४०१ ॥

### भ्रातृपुत्रग्रहणविधिः

कृतत्रयविवाहस्य पत्नीं दृष्ट्वा चिरं पृथक् ।
द्वादशाब्दमलभ्यैतं तद्रजोदर्शनात्परम् ॥ ४०२ ॥
पुत्रग्रहः प्रकथितो मुख्योऽयं तद्ग्रहे विधिः ।
तत्र साक्षात्कनिष्ठस्य सुतश्चेज्जातमात्रकः[5] ॥ ४०३ ॥
प्रवरः कथितः सद्भिस्तस्य व्यवहितश्च[6] चेत् ।
[7]तस्मान्न्यूनो भवेत्पुत्र एवं द्वित्रिविभेदतः ॥ ४०४ ॥

1 न for स्व—क, ख.
2 Line omitted by क and ख.
3 वा—क, ख.
4 पत्नीपितृदिनं—क, ख.
5 मात्रतः for मात्रकः—क, ख.
6 तु for च—क, ख.
7 क and ख omit the portion in the middle and read : तस्मान्न्यूनो भवेत्पुत्रस्तन्न्यूनो नात्र संशयः ।

[1]भ्रातुः पुत्रो भवेन्न्यूनः सद्यः स्तन्यरसग्रहात् ।
परं[2] तद्ग्रहणात्पुत्रस्तस्मान्न्यूनः प्रजायते ॥ ४०५ ॥
एवमन्येषु नवसु जातहोमात्परं पृथक् ।
दिनभेदेन तन्न्यूनो दत्तो भवति पुत्रकः ॥ ४०६ ॥
ततो ज्येष्ठस्य चेत्पुत्रस्तन्न्यूनो नात्र संशयः ।
न चाप्येकद्वित्रिभेदाद् [3]भ्राता व्यवहितो यदि ॥ ४०७ ॥
तस्य सूनुस्तथा न्यून [4]एवमेव पुनस्त्वथ ।
सापत्नीमातृतनया उन्नेया ज्येष्ठतः परम् ॥ ४०८ ॥
तनयाः शास्त्रमार्गेण न्यूना एव भवन्ति ते ।
एवं पितृव्यतनयतनयाश्च पृथग्विधाः ॥ ४०९ ॥
तन्न्यूना एव कथिताः [5]सगोत्रा एवमेव वै ।
विज्ञेयाः किल किं भिन्नगोत्राश्चेत्तु ततः पुनः ॥ ४१० ॥
किं वाच्यमस्ति तज्ज्ञात्वा बुद्धिमान् कालदेशकौ ।
समालोच्य विधानेन कुर्यात्पुत्रस्य संग्रहम् ॥ ४११ ॥

विभागे भ्रातरस्तुल्याः

विभागे भ्रातरस्तुल्यास्तत्पुत्रास्तत्समा हि यत् ।
ते [6]गृहीत्वा न तुर्यांशं [7]तल्लभन्ते सुतोद्भवे ॥ ४१२ ॥
सममेव लभन्तेऽंशमौरसेन समा हि ते ।
धर्मपत्न्यां समुद्भूत औरसः कथितो बुधैः ॥ ४१३ ॥
द्वितीयादिसमुद्भूतो न तत्साम्यमवाप्नुयात् ।

[1] भातृपुत्रो—क, च.
[2] एवं—घ.
[3] भ्रातृव्यवहिता—च, ङ, घ.
[4] एकमेव—च, ङ, घ
[5] स्वगोत्रा—क, च.
[6] गृहीता—All Mss.
[7] न लभन्ते—घ.

कामजपुत्राः

धर्मपत्नीसुतं प्राहुरौरसं ब्रह्मवादिनः ॥ ४१४ ॥
द्वितीयादिसुतान् सर्वान् कामजानिति चोचिरे ।
धर्मपत्नीसुतो ज्यैष्ठ्यं दत्ताद्गौरवमाप्नुयात् ॥ ४१५ ॥
पश्चाज्जातः कनिष्ठोऽपि द्वितीयादिसुतास्तु चेत् ।
पित्र्यादिक्रियया कालाद्धर्मपत्नीसुतैः समाः ॥ ४१६ ॥
भवन्त्यपि न संदेहस्तथापि पुनरेककम् ।
प्रवदामि समुद्भूतस्तस्मात्तत्कार्यकृद्भवेत् ॥ ४१७ ॥
वयोऽधिको दत्तसुतो न तत्कार्ये प्रभुर्भवेत् ।
दत्तसूनुर्धर्मपत्न्याः सति तातेऽथवा न चेत् ॥ ४१८ ॥
द्विभार्यके क्रियाकृच्चेत्तद्भार्याया [1](अथापि वा) ।
दत्तसूनुस्तयोरन्यतरस्य यदि कर्मकृत् ॥ ४१९ ॥
सत्यौरसे तत्समोऽयं प्रभवेदिति वै मनुः ।
दौहित्रो यदि दत्तः स्याद्भ्रातृजो वा तथाविधः ॥ ४२० ॥
औरसेनैव तुलितौ सततं धर्मतत्परौ ।
दत्तस्य पितरौ प्रोक्तौ ग्राहकावेव संततम् ॥ ४२१ ॥
पितृत्वमपि दत्तेन तिष्ठेज्जनकयोर्न तु ।
दानहोमात्परं तस्मात्पितरावस्य तौ मतौ ॥ ४२२ ॥
पितृत्वमपि मातृत्वमेकत्रैव हि तिष्ठति ।
न तिष्ठति तदन्यत्र क्रियाशतसहस्रकात् ॥ ४२३ ॥
पितृत्वं मातरि गतमेकशेषजमल्पकम् ।
यथा[2] न तत्कार्यकरं मातृत्वमपि तत्तथा ॥ ४२४ ॥

[1] These four letters are missing in all Mss.
[2] तथा—घ.

पितृव्यपत्न्यादीनां स्यात्ताह्क्पत्नीत्वमेव हि ।
तासां भवति तस्मात्तु [1]न तन्मातृत्वमुच्चरेत् ॥ ४२५ ॥

प्रजापतिभ्यो[2] ह्यभिमानसूनुः
पितृव्यसूनुस्त्वथवा [3]सगोत्रः ।
ज्येष्ठः कनीयान्न भवेत्तथैको[4]
न भिन्नगोत्रो न [5]सगोत्रविद्विट् ॥ ४२६ ॥

[6]सगोत्र्यसंमतः सूनुर्यः कश्चन समागतः ।
पुत्रत्वेनोदरपरो नाभिमानसुतो भवेत् ॥ ४२७ ॥

धर्मपत्नीसुतो वर्णी द्वितीयादिसुतो गृही ।
जातपुत्रोऽप्याहिताग्निर्न समस्तेन वर्णिना ॥ ४२८ ॥

धर्मपत्नीसुतो बालो द्वितीयादिसुतो युवा ।
आहिताग्निर्दशसुतो न समस्तेन चोदितः ॥ ४२९ ॥

स एव पितृकृत्येषु मुख्यकर्ता न संशयः ।
अनुपेतोऽप्यसौ [7]यद्यप्यथ तत्कर्तृतोऽखिलम् ॥ ४३० ॥

कारयेज्ज्येष्ठमुखतस्तथा चेत्कर्म तत्परम् ।
जातमात्रे धर्मपत्नीसुते गौणसुताः परे ॥ ४३१ ॥

द्वितीयादिपुरोद्भूता भवेयुस्तत्क्षणान्ननु ।
धर्मपत्नीसुतोत्पत्त्या दत्ततत्कार्यतोऽपि च ॥ ४३२ ॥

द्वितीयादिसुतानां स्यात्सद्यो हैन्यं श्रुतीरितम् ।
तत्पत्नीकर्मकर्ता चेद्द्वितीयातनयस्य सः ॥ ४३३ ॥

[1] न तस्मात्पुत्रमुच्चरेत्—क, ख, घ. [2] प्रजापतिजो—क, ख, ङ, च.
[3] सगोत्रजः—घ. [4] भवेत्तदैकः—घ.
[5] सगोत्रविद्विजः—घ. [6] सगोत्रसंमतः—क, ख; सगोत्रः संमतः—च.
[7] यद्वाप्यथ—क, ख.

## दत्तादौ विशेषः

दत्तोऽधिकश्चेद्भवति पितुर्यदि पुनस्तराम् ।
असन्निधौ सन्निधौ वा ताते जीवति दत्तकः ॥ ४३४ ॥
तद्भार्याकर्मकर्ता चेत्तत्सुतापतिरिष्यते ।
[1]द्वितीयातनयश्चेत्तु कर्मकृद्दत्तकस्तदा[2] ॥ ४३५ ॥
सद्यो हैन्यमवाप्नोति न [3]ज्येष्ठातनयो यदि ।
तातस्तद्धर्मपत्नी च समौ दत्तस्य संततम् ॥ ४३६ ॥
पराणि तत्कलत्राणि संस्कार्याणि सुतो न चेत् ।
सुते सति स एव स्यात्तत्कर्मणि[4] न चेतरः ॥ ४३७ ॥
सर्वदैवं समाख्यातो न तेनायं हि दुर्बलः ।
दत्तेन तत्कलत्रस्य प्रथमस्य [5]कृता क्रिया ॥ ४३८ ॥
सत्यन्यातनये तावन्मात्रेणायमथाधिकः ।
तुर्यांशोऽपि समांशः स्यात्तादृशं कर्म तत्कृतम् ॥ ४३९ ॥
सति दत्तसुते तस्मात् पितृपत्न्या विचक्षणः ।
ज्येष्ठायास्तत्कनिष्ठाजः स्वयं कर्म समाचरेत् ॥ ४४० ॥
ज्येष्ठेन दत्तपुत्रेण तत्क्षेत्रस्य पितुस्तु वा ।
[6]कृते कर्मणि तस्य स्यादाधिक्यं तत्सुतात्परम् ॥ ४४१ ॥
ताते सति कलत्रस्य तत्पुरो ज्यायसोऽस्य चेत् ।
कृतं कर्म हि दत्तेन सद्यः पुत्राधिको भवेत् ॥ ४४२ ॥
पुत्रेषु सत्सु दत्तेन पितुः कर्म कृतं तु चेत् ।
न[7] [8]तदा तस्य वाधिक्यं स्वाम्यं किमपि लभ्यते ॥ ४४३ ॥

[1] द्वितीयो तनयश्चेत्तु—क, ख.
[2] तथा—क, ख, ङ, च.
[3] ज्येष्ठो तनयो—क, ख, घ.
[4] कार्याणि—च, ङ ; कर्माणि—घ.
[5] स्वयं क्रिया—क, ख.
[6] कृतकर्मणि—क, ख.
[7] स for न—घ.
[8] ते तातस्य—for तदा तस्य—ङ, च.

यदि तज्ज्येष्ठभार्याया अपुत्रायाः कृतं तु तत् ।
कर्म तत्पुरतो नूनं दत्तः स्यादधिकः सुतात् ॥ ४४४ ॥
पितुः कर्म कृतं तेन दत्तेन यदि तत्परम् ।
अप्ययं मुख्यकर्ता न मुख्यः स्यात्सुत एव वै ॥ ४४९ ॥
निखिलेभ्यो सुतेभ्योऽसावौरसो ह्यतिरिच्यते ।

पत्नीविशेषाः, तत्र धर्मपत्नी

औरसो धर्मपत्नीजो धर्मपत्नी च केवलम् ॥ ४४६ ॥
याऽनेन पूर्वं बाला वा दुर्गुणा वा विवाहिता ।
सैवास्य धर्मपत्नी स्याद्धर्मविद्भिरुदाहृता ॥ ४४७ ॥

द्वितीयपत्नी

तत्पश्चाद्या कुलीना वा सुरूपा वा वयोऽधिका ।
न सास्य धर्मपत्नी स्याद्द्वितीया भोगिनी स्मृता ॥ ४४८ ॥
सति चेत्तनये तल्पे पुनः कामाद्विवाहिता ।
द्वितीया भोगिनी नारी धर्मपत्नी न सोच्यते ॥ ४४९ ॥

पुत्राणां ज्यैष्ठ्यकानिष्ठ्यम्

धर्मपत्नीसमुद्भूतो ज्येष्ठपुत्र इति [1]स्मृतः ।
पत्नी तनयराहित्यकृतवैवाहिकस्य [2]सा ॥ ४५० ॥
येयमूढा धर्महेतोर्धर्मपत्न्यभिचोदिता[3] ।

भोगिनी

कलत्रे सति पुत्रे वा पौत्रे नप्तरि सन्ततौ ॥ ४५१ ॥
स्थितायां येयमूढा स्याद्भोगिनी काञ्चनाहृया ।

[1] श्रुतः—ङ.
[2] च for सा—च, ङ, घ
[3] अपि चोदिता for अभिचोदिता—क, ख, ङ, च.

भर्मणावावातादिपत्नयः

[1]भर्मणो यानि नामानि तानि सर्वाणि कृत्स्नशः ॥ ४९२ ॥
लभतेऽतस्तु सा प्रोक्ता द्वितीया काञ्चनाह्वया ।
न धर्मपत्नी भवति भोगिन्येव परा स्मृता ॥ ४९३ ॥
भर्मणेयं यतः साध्या वनिता तेन सा स्मृता ।
सर्वस्वर्णपदैर्वाच्या वावातेति च फण्यते ॥ ४९४ ॥
परा दुर्वर्णनामानि यानि ख्यातानि भूतले ।
तानि सर्वाण्यवाप्नोति तृतीयेति च तां विदुः ॥ ४९५ ॥
परिवृत्तीति [2]तामेके विज्ञेयां विमलामिति ।
हरिद्रां हरिणीं कल्यां जगदुर्ब्रह्मवादिनः ॥ ४९६ ॥
एतासां तनयाः सर्वेऽप्युत्तरोत्तरदुर्बलाः ।
धर्मपत्नीसुतान्न्यूना[3] वयसाप्यधिकास्तराम् ॥ ४९७ ॥
प्रथमा धर्मपत्नी च सुभगा महिषीति च ।
सत्कर्णीति च कल्याणी [4]धर्मज्ञैः कथिता हि सा ॥ ४९८ ॥
धर्मपत्नीसुतो बालो मौञ्जीविरहितोऽपि वा ।
तिष्ठत्सु चान्यापुत्रेषु कर्मभिः सत्कृतेष्वपि ॥ ४९९ ॥
उत्तमः पितृकृत्येषु तस्मादग्निप्रदः स तु ।
तेन प्राधानिकं कर्म यद्यत्तत्तु तन्मुखात् ॥ ४६० ॥
सम्यक्कारयितुं न्याय्यं मन्त्रान् सर्वान्परे सुताः ।
पठेयुर्वै विधानेन [5]चैवं धर्मोऽखिलो महान् ॥ ४६१ ॥

[1] भर्मणोऽमूनि—घ.

[2] तामेकविज्ञेयाममलामिति—क, ख; तामेव विज्ञायाविमलामिति—ङ; तामेव विज्ञाय विमलामिति—च.

[3] सुतन्न्यूनाः—क, ख.

[4] कर्मज्ञैः—क.

[5] चरन्—क, ख, च.

विहितस्तु समासेन तेन यावत्कृतं न तु ।
तावत्स तु मृतो तातः परलोकं न विन्दति ॥ ४६२ ॥
प्रेतत्वाच्च न निर्मुक्तः क्षुत्तृष्णापीडितस्तराम्[1] ।
शरणं यत्र कुत्रापि ह्यटन् धावन् खलन् भ्रमन् ॥ ४६३ ॥
नित्यं[2] च सलिलाकाङ्क्षी प्रेतलोके [3]ह्यधोमुखः ।
रुग्णो मुण्डश्च विकलो जडो भ्रान्तश्च दुर्मनाः ॥ ४६४ ॥
निवसेदेव सततं तस्मादौरस एव सः ।

### धर्मपत्नीजस्य स्पर्शमात्रकर्तृत्वम्

धर्मपत्नीसमुद्भूतो ह्यपरिज्ञातवर्णकः ॥ ४६५ ॥
प्रेतकार्यस्पर्शमात्रं स्नात्वा कुर्यादमन्त्रकम् ।
तावन्मात्रेण तत्तातः कृतकृत्यः सुखीतराम् ॥ ४६६ ॥
सम्यक् पितृत्वमाप्नोति नित्यानन्दः प्रजायते ।
तत्तन्मातुस्तत्तनया मुख्यकर्तार ईरिताः ॥ ४६७ ॥
सत्स्वौरसेषु मुख्यत्वात्त एव कथिताः [4]पराः ।
तत्तत्कर्मसु कर्तारो[5] नान्यमातृसमुद्भवाः ॥ ४६८ ॥
धर्मपत्नीसुते बाले केवलं रहिताक्षरे ।
अस्पष्टस्पष्टवर्णे वा विद्यमाने मृते तु वा ॥ ४६९ ॥
कक्ष्यानन्तरनिष्ठेन येन केन सुतेन वा ।
तत्समेनाऽथवा भ्रात्रा शिष्येणान्येन बन्धुना ॥ ४७० ॥
सर्वं कारयितव्यं स्यात्समन्त्रेणात्र[6] तत्र चेत् ।
यद्यत्प्राधानिकं कर्म [7]तत्र तत्रास्य वै शिशोः ॥ ४७१ ॥

[1] ०पतितस्तराम्—ङ, च. [2] सत्यं—ङ, च. [3] ह्यधोमुखम्—घ.
[4] पुरा—घ [5] तत्कर्मसु प्रकर्तारो—ङ, च.
[6] अतः for अत्र—च ; अन्यः—क, ख. [7] तन्त्रं—घ.

### सान्निध्यं स्पर्शमात्रकर्तृत्वम्

स्पर्शमात्रः प्रकर्तव्यस्तत्सान्निध्यं च केवलम् ।
अपेक्षितं मृतस्यात्र [1]महातृप्त्यैकहेतवे[2] ॥ ४७२ ॥
तत्सान्निध्यस्पर्शमात्रात् स मृतः [3]सुखभागलम् ।
भवेदेव न संदेहस्तथा तस्मात्तु तच्चरेत् ॥ ४७३ ॥
मृतस्यैतानि प्रोक्तानि तारकाणि महात्मभिः ।
कारकाणि महातृप्तेस्तानीमानि स्मृतानि हि ॥ ४७४ ॥

### श्राद्धादावत्यन्ततृप्तिकराणि

जकारपञ्चकं त्वेकं धर्मपत्नीजसन्निधिः ।
तत्कार्यकरणं तद्वद्ग्रहणश्राद्धमेव च ॥ ४७५ ॥
गयाश्राद्धं च फल्गुन्याः शाकश्राद्धमथापि च ।
[4]तथैव वरणं गौर्या वृषोत्सर्जनमेव च ॥ ४७६ ॥
महालयश्च पनसस्त एते निखिलाः पराः ।
अत्यन्ततृप्तिमुक्त्यैकनिदानानीति[5] तान् जगुः ॥ ४७७ ॥
[6]जन्मभूम्यादिकं तत्र तज्जकारस्य पञ्चकम् ।
मृतस्य [7]तारकं पूर्वं तत्परं त्वौरसस्य वै ॥ ४७८ ॥
सान्निध्यं मृतिकाले तु द्वितीयादिसुतस्य [8]वा ।
परलोकानुकूला या मृतस्य प्रभवेत्तथा ॥ ४७९ ॥
तत्क्रिया [9]मन्त्रपूर्वैवं मृतस्य प्रभवेत्तथा ।

[1] महत्तृप्त्यैकहेतवे—च.
[2] च repeats these five lines.
[3] सुखभाग्यलम्—क, ख, च
[4] Line omitted by च.
[5] निधानानीति—ङ, च.
[6] घ Ms. contains a marginal heading here : पितृमोचकजकारपञ्चकम् .
[7] कारकं—ङ.
[8] हि—ङ.
[9] मन्त्रपूता वै—क ; मन्त्रपूतैवं—ख ; मन्त्रपूतैवं—ङ, च.

एवं स्याद्ग्रहणश्राद्धं गयाश्राद्धमथापरम्[1] ॥ ४८० ॥
तृप्तिदं[2] फाल्गुनीश्राद्धमष्टोत्तरशतैरुत ।
शाके श्राद्धं यत्क्रियते तदेकमथ तारकम् ॥ ४८१ ॥

### गौरीदानं पितृतृप्तिकरम्

गौरीदानं वृषोत्सर्गः पाक्षिकोऽयं महालयः ।
स्थापनं पनसाख्यस्य तानीमानि स्मृतानि हि ॥ ४८२ ॥
पितॄणामपि सर्वेषां वल्लभानीति वै जगुः ।
जकारपञ्चकं वत्सः परलोकगतस्य तत् ॥ ४८३ ॥
[3]तृप्त्यै संतरणायापि प्रोवाचैवं न चेतरत् ।

### जकारपञ्चकम्

जलार्धं जाह्नवीतीरं जनार्दनमहास्मृतिः ॥ ४८४ ॥
ज्वलनो जननोत्पन्नसुतसान्निध्यमेव च ।
जकारपञ्चकं प्रोक्तं कथितं जन्ममोचकम् ॥ ४८५ ॥

### ग्रहणश्राद्धलक्षणम्

ग्रहस्पर्शादथ यतन् सद्यः पत्न्यादिभिर्वृतः ।
तदान्नेनैव[4] यच्छ्राद्धं करोति पितृतृप्तये ॥ ४८६ ॥
स्नात्वा तेनैव विधिना तद्ग्रहश्राद्धमुच्यते ।
तदेतत्किल देवेशो भगवान् भूतभावनः ॥ ४८७ ॥
षोडशश्राद्धतुलितं महादानशताधिकम् ।
प्रोवाच किल सर्वेशो गयस्य सुमहात्मनः ॥ ४८८ ॥
गयाफल्गुनिकाशाकश्राद्धान्येतत्समानि वै ।

[1] ह्यवापरम्—घ.
[2] स्वस्तिदं—क, ख.
[3] तृप्त्यैवं तरणायापि—ङ, च.
[4] तदानेनैव—क, ख, ङ, च.

गौरीदानं तथैवेति वृषोत्सर्जनमेव च ॥ ४८९ ॥
महान्ति [1]निष्क्रियाणीति मनुः कात्यायनोऽङ्गिराः ।
कुत्सवत्साग्निभरतविश्वामित्रशुकादयः ॥ ४९० ॥
नैतेषां तुल्यमपरं पैतृकं कर्म विद्यते ।
लोकत्रयेऽपि[2] परमं तस्मादेतेषु चैककम् ॥ ४९१ ॥
अपि कर्ता कृतार्थः स्यात् सुकृती [3]पितृतारकः ।
[4]इत्येवमेनं [5]जहृषुः पनसस्थापकं तु तम् ॥ ४९२ ॥
वयं न विद्मः को वा स दूर्वासाजनकोऽथवा ।
कुम्भोद्भवो दधीचिर्वा शिबिर्वा नहुषो नलः ॥ ४९३ ॥
मान्धाता वाऽप्यलर्को वा हरिश्चन्द्रोऽथवा महान् ।
गयो रामोऽथवा श्रीमानेषु चैकोऽथवा न चेत् ॥ ४९४ ॥
एतत्समष्टिर्लोकानां हितायाऽत्र भुवः स्थले ।
अवतीर्णो न सन्देह इति ब्रह्मा शिवो हरिः ॥ ४९५ ॥

पनसे स्थापिते महान् विशेषः

पनसस्थापकं प्रोचुः शलाटोस्तस्य पृष्ठतः ।
सर्वे[6] कण्टकरूपेण समाश्रित्यैव सन्ततम् ॥ ४९६ ॥
अष्टोत्तरशतश्राद्धदिव्यशाकविशेषकाः ।
प्रवर्तन्ते यतस्तस्मात्तदा शाकसहस्रकम्[7] ॥ ४९७ ॥
तस्यास्य दिव्यरूपस्य पितृप्राणैकरूपिणः ।
सर्वदेवस्वरूपस्य सर्वमन्त्रमयस्य च ॥ ४९८ ॥

[1] सत्क्रियाणीति—क, ख, ङ, च.
[2] लोकत्रयेषु—ङ.
[3] पितृद्धारकः—क, ख.
[4] इत्येवमेवं—क, ख.
[5] जहिषिरे—All Mss.
[6] सर्वं—च.
[7] यतस्तस्माच्चेदाशाकसहस्रकम्—च, ङ.

सर्वयज्ञमहातीर्थसरिद्भिसुवर्ष्मणः ।
[1]निखिलागमशास्त्रौघव्रतकृच्छ्रामृतान्धसाम् ॥ ४९९ ॥
निधानस्य[2] पवित्रस्य पित्र्याकर्षणवर्ष्मणः ।
स्थापनं क्रियते येन तच्छायापत्रमूलकैः ॥ ५०० ॥
फलैः शलाटुभिर्वापि काष्ठैश्छायाभिरेव च ।
क्रियते पितृतृप्तिः स्याद्बुद्धिपूर्वमबुद्धितः ॥ ५०१ ॥
तस्य पुण्यफलं वक्तुं गुरुणा ब्रह्मणापि वा ।
शक्यं [3]वर्षसहस्रेण फणिराजेन वा न तु ॥ ५०२ ॥
पुरा किल पितृतृप्तिहेतवोऽखिलशाककाः ।
तपस्तप्त्वा वरेणाथ [4]ब्रह्मणः पनसं श्रिताः ॥ ५०३ ॥

## अलर्कश्राद्धम्

[5]अलकालर्ककारूषाच्युतचूताजरामराः ।
सप्तस्वेतेष्वच्युतश्चेदलर्कश्चाजराख्यः ॥ ५०४ ॥
प्रतिमासजभेदेन स्मृता द्वादशजातयः ।
[6]अतः षट्त्रिंशत्कसंख्या [7]तस्मादेतत्त्रयस्य च ॥ ५०५ ॥
एतेषां मासजानां [8]स्यादेकजातिशलाटुतः ।
[9]तद्भिन्नैकादशानां च शलाटुफलभेदतः ॥ ५०६ ॥

[1] निखिलागमशास्त्रेषु व्रतकृच्छ्रामृतान्धसाम्—क, ख, ङ, च; निखिलागमशास्त्रौघव्रतकृच्छ्रमृतान्धसाम्—घ.
[2] निदानस्य—क, ख, घ.
[3] वर्षसहस्राणि—क, ख, ङ, च.
[4] ब्रह्मणा—क, ख, ङ, च.
[5] अलकालर्ककामाषाच्युतचूताजिलामला:—ङ, च; अलकालर्ककारूषाचुतचूताजरामरा:—क, ख; अलकालर्ककालूषाच्युतचूताजरामरा:—घ.
[6] Line omitted by ङ and च.
[7] तस्मादेव त्रयस्य च—क, ख.
[8] स्यात्तेन जातिशलाट्टत:—क, ख.
[9] Line omitted by ङ and च; तद्भिन्नैकादशानां—क, ख.

द्वैविध्यं किल संप्राप्तं शलाटोरपि वै मुहुः ।
आर्द्रशुष्कप्रभेदेन द्वैविध्यं समुपागतम् ॥ १०७ ॥
तद्वत्फलानां च पुनर्द्वैविध्यं समुपागतम् ।
तच्चैत्रामलको ग्राह्य आशरत्सपवित्रकः ॥ १०८ ॥

## दिव्यशाकाः श्राद्धार्हाः

[1]वारुकः कर्मजः शारिः श्रीपर्णं श्रीकरः शमी ।
युगदो युग्मदो रम्यं [2]वज्रपर्णी करीषकी ॥ १०९ ॥
कारवल्ली त्रयी कारुः कामकृत् कामवारकः ।
[3]कामवाही [4]कामदूरः शाकुटद्वयमग्रिमा ॥ ११० ॥
कामप्रं कामदं[5] कम्रः कलिङ्गः [6]कलिवारुकः ।
अजश्रीरजचर्माख्यो [7]दारुको धर्मदो दमः ॥ १११ ॥
कुलं कारी मनुर्मानी [8]राजश्रीः शेखरी नलः ।
नालकः[9] कारकः खाद्यो गायत्रो हरिलोचनः ॥ ११२ ॥
हरिदश्वो हयग्रीवः कारुण्यः कनकप्रियः ।
कार्मुकः कर्मकृत्कार्यो [10]धैर्यदो [11]मानकृत् कुणिः ॥ ११३ ॥
शरच्छ्रीको[12] मङ्गलको कुण्डोऽकुण्डो गुडप्रियः[13] ।
फलश्रीर्मधुरग्रीवो [14]दानदः [15]कटुकः क्षमी ॥ ११४ ॥

[1] बारुक:—क, ख.
[2] वज्रकर्णी—ङ, च.
[3] कामदाही—क, ख.
[4] कामदरः—क. ख.
[5] कामपं—ङ, च.
[6] कलिवादकः—ङ, च.
[7] तारको—च.
[8] राजश्रीशाबरो—ङ, च ; राजश्रीशाबको—ङ, घ.
[9] नाशकः—ङ, च.
[10] धैर्यतो—घ.
[11] मासकृत्—च.
[12] शरच्छ्राणो—क, ख ; शरच्छ्रोणी—घ.
[13] कुण्डो कुण्डगुदक्रियः—क,ख,च.
[14] दासन्दः—घ.
[15] पटुकः क्षमिः—क, ख.

मान्मथो [1]मधुरस्त्रावा वज्रघ्नो वज्रपञ्जरः ।
वल्मीकजो [2]बालराजो बालपुत्रो बृहद्रथः ॥ ९१५ ॥
कर्णकारोऽक्षिरोगघ्नः [3]प्रतीहारी [4]वलीमुखः ।
शर्मकृन्नेत्ररोगघ्नो धान्यद्वेषी[5] दरिद्रहृत् ॥ ९१६ ॥
कुशलः [6]कर्मसुखकृत् कण्ठहृत् कनकप्रभः ।
विश्वाकरः पिप्पलघ्नः क्षुन्मूलो क्षुन्निवारणः ॥ ९१७ ॥
अग्निधामा [7]धरानाथो धरावासो धराश्रयः ।
अद्रिराजो धर्मदेशी[8] [9]धर्माश्रयकरः प्रराट् ॥ ९१८ ॥
अनिकेतो निमिग्रीवो नीलनेत्रो मरुत्पतिः ।
मणिमालो बृहन्नालो नारदो [10]लिकुचो नटः ॥ ९१९ ॥
कुम्भाण्डः कुण्डली चक्रः शैत्यकर्मा शताकरः ।
कल्याणाधार ईशान ईशानो दक्षिणास्पदः ॥ ९२० ॥
शतवल्ली महावल्ली चक्रवल्ली निपानकृत् ।
द्रोणप्रियो द्रोणराजो गुल्महृत् कटुमूलकः ॥ ९२१ ॥
नित्यश्रीको नित्यपुष्पो निर्मूलो बहुपुष्पकः ।
प्लक्षराजन्यसंभूतो हेतिमूलो निशाप्रियः ॥ ९२२ ॥
महादाहकरोऽश्वत्थः सुन्दरः पर्वताश्रयः ।
कर्दमाढ्यः कर्दमाधः सूपस्थानः सुरास्पदः ॥ ५२३ ॥
पूर्णपात्रं[11] शर्मपात्रं शातकुम्भः स्थिराकरः ।

[1] मधुरस्त्रो वा—क, ख ; मधुरश्रावा—च.
[2] बालरजः—ङ, च.
[3] व्रणहारी—च.
[4] मलीमुखः—घ.
[5] धान्यदूषी—ङ, च ; धान्यमाषी—घ.
[6] कण्ठसुखकृत्—ङ, च.
[7] धरावारः—ङ, च, घ.
[8] धर्मपेशी—ङ, च.
[9] धर्मश्रेयस्करः—घ.
[10] विकुचो—क, ख ; लिकुरो—घ.
[11] पूर्णपत्रं—ङ, च, घ.

[1]काव्यश्रीः [2]श्रीकरः श्रीगः परागश्रुतिदीपनः[3] ॥ १२४ ॥
महामाली जीवमाली पाशाढ्यः पाशदुःसहः ।
प्रथितो [4]प्राणतरणो [5]देवराजप्रियः पणः ॥ १२५ ॥
सद्योमूलः [6]पण्यमतिः [7]गरदूषो गणत्रिगः ।
गुहावासो[8] गुहामूल्यं भरण्यं मुनिवन्दितः ॥ १२६ ॥
मुनिप्रियो [9]दन्तरिपुः शर्मकृच्छर्ममत्सरी ।
त एते दिव्यशाकाः स्युः श्राद्धकर्मणि चोदिताः ॥ १२७ ॥
एतेषामम्लयोगेन तदयोगेन च द्विधा ।
भवेयुः किल ते भूय एतेषां पुनरेव वै[10] ॥ १२८ ॥
मध्ये शाकुटकादीनि मूलतः [11]स्तम्भतस्तथा ।
पत्रतस्त्रिविधो[12] ज्ञेयः कानिचिच्छुष्कभेदतः ॥ १२९ ॥
पक्वेन जलतैलाभ्यां पृथक्त्वेन समष्टितः ।
चूर्णकल्कप्रभेदेन यत्नतः स्यात्सहस्रकम् ॥ १३० ॥

पनसमहिमा

एतत्सर्वं चैकपात्रे निधाय किल पद्मजः ।
अन्यपात्रे च पनसं तुलयामास पाणिना ॥ १३१ ॥
तदा तु पनसः किंचिद्बभूवाधिक एव वै ।

[1] काम्यश्रीः—घ; रौप्यश्रीः—ङ.
[2] करणग्रीवः—क, ख.
[3] तापनः for दीपनः—ङ, च.
[4] प्राणतरुणो—क, ख, घ, ङ.
[5] देवराजप्रियापणः—घ.
[6] फण्यमतिः—च.
[7] गुणदूषः—च; गणदूषः—ङ.
[8] महावासः—घ.
[9] वन्तरिपुः—क, ख.
[10] ङ and च add a line after this: भूतले ब्राह्मणाः सन्तः पवित्रे श्राद्धकर्मणि.
[11] स्तम्बतस्तथा—ङ, च.
[12] तत्र तत्त्रिविधो—क, ख, घ.

बृहती [1]त्रिशतसमा तदा जाता हि पश्यताम् ॥ ९३२ ॥
आर्द्रकं षट्छतसमं [2]तिलाः शतसमं तराम् ।
एवं तुलायां[3] त्रितयं संबभूव तदादि वै ॥ ९३३ ॥
भूतले ब्राह्मणाः सन्तः पवित्रे श्राद्धकर्मणि ।
तुल्यं शाकसहस्रस्य तिलार्द्रकबृहत्ककम् ॥ ९३४ ॥
संपादयन्ति यत्नेन पितृणामतितृप्तये ।
तिलमाषव्रीहियवा मुद्गगोधूमशाककाः ॥ ९३५ ॥
काशा दशविधा दर्भा मुख्यामुख्याश्च ये मताः ।
खड्गं दशविधं मांसं प्रेतपर्पटभूतपाः ॥ ९३६ ॥
वामदेवादयो विप्राः पितृसूक्तविशेषकाः ।
गयादिपुण्यक्षेत्राणि वटभूरुह एव च ॥ ९३७ ॥
बिन्दुमाधवविश्वेशाचतुर्दशपदानि च ।
ईशानादिमुखान्येवं[4] गदाधरमहेश्वरौ ॥ ९३८ ॥
भागीरथी फल्गुनी च यमुना च सरस्वती ।
पितृसूक्तानि सर्वाणि वैष्णवानि विशेषतः ॥ ९३९ ॥
[5]रक्षोघ्नानि पवित्राणि पुनरन्ये तथाविधाः ।
श्राद्धद्रव्यविशेषाः स्युः पितृणामतिवल्लभाः ॥ ९४० ॥
ते सर्वे पनसस्त्वेकः सुमहाक्षयकारकः ।
[6]एतस्मिन् पनसे लब्धे सर्वश्राद्धनिदानके ॥ ९४१ ॥
मृताहदिवसे पुण्ये नित्यतृप्ताः सुतोषिताः ।
[7]पितरस्तुन्दिलाः सद्यो भवन्त्येवेति सा श्रुतिः ॥ ९४२ ॥

[1] त्रिशतीसमा—क, ख.
[2] All Mss. corrupt.
[3] एवं तु वायोः—क, ख.
[4] ईशानादिमुखाद्येवं—क, ख.
[5] राक्षोघ्नोनि—क, ख.
[6] एकस्मिन्—क, ख, ङ, च.
[7] पितरस्तुष्टिदाः—ङ, च.

एवं सत्यत्र यो मर्त्यः पनसस्थापको हृदा ।
मत्याऽमत्याथवाऽतीव[1] भक्त्याऽभक्त्याथवा पुनः ॥ ९४३ ॥
ज्ञानेनाऽज्ञानतो वाऽपि भूतले यत्र कुत्रचित् ।
स एव कथितः सद्भिर्गयाश्राद्धसहस्रकृत् ॥ ९४४ ॥
पनसं[2] सहकारैश्च कदल्यादिद्रुमैः सह ।
स्थापयित्वा विधानेन यत्नात्संवर्धितैः शिवैः ॥ ९४५ ॥
चम्पकैः पाटलीभिश्च मधूकैः सुमनोरमैः ।
चन्दनैः [3]स्पन्दनैर्नीपैस्तच्छायाभिश्च तत्फलैः ॥ ९४६ ॥
पत्रैः पुष्पैश्च तत्काष्ठैर्नानाशाकविशेषकैः ।
कुर्वन् स्ववृत्या प्रयतन् [4]कुलकोटिसहस्रकैः ॥ ९४७ ॥
ब्रह्मलोकमवाप्येह[5] [6]तत्सायुज्यमवाप्नुयात् ।
पनसं यत्र कुत्रापि दृष्ट्वा सद्यो महामनाः ॥ ९४८ ॥
तत्काष्ठपत्रकुसुमशलाटुफलमुख्यकैः ।
येन केनापि वा तृप्तिं पितॄणां तां समाचरेत् ॥ ९४९ ॥
सद्य एव ब्राह्मणेभ्यो [7]लब्धमात्रे च तत्फले ।
दृष्टमात्रेऽथवा भक्त्या दद्याद्वै पितृतृप्तये ॥ ९५० ॥
शलाटुं पानसं पत्रं फलं दृष्ट्वा तु यो नरः ।
पितृतृप्तिमकृत्वैव तूष्णीं तिष्ठेन्महाजडः ॥ ९५१ ॥
तं तस्य पितरः सर्वे शपन्ति किल कोपतः ।
दृष्टमात्रे तु तस्मात्तु पानसद्रव्यमुत्तमम् ॥ ९५२ ॥
येन केनाप्युपायेन पत्रेण च फलेन वा ।

[1] नो चेत् for अतीव—ङ, च.
[2] पनसः—क, ख, घ.
[3] निःस्वनैर्नीपैः—क, ख; दिव्यगन्धैश्च—ङ, च.
[4] कालकोटिसहस्रकैः—ङ.
[5] ब्रह्मलोकमवाप्यैव—क, ख; ब्रह्माणं समवाप्यैव—ङ, च.
[6] ब्रह्मसायुज्यमाप्नुयात् —ङ, च.
[7] श्राद्धमात्रे—ङ, च.

शलाटुना छायया वा पितृतृप्तिनिमित्तकम् ॥ ९९३ ॥
यत्किंचिदपि वा तेषु ब्राह्मणेभ्यः प्रदापयेत् ।
तावन्मात्रेण पितरो नित्यतृप्ता भवन्ति वै[1] ॥ ९९४ ॥
एवं सत्यत्र यः कश्चिद्भाग्यवान् पनसी नरः ।
तद्द्रव्यैरनिशं भक्त्या तृप्त्यकृत् पातकी भवेत् ॥ ९९९ ॥
गालवस्तु पुरा [2]विप्रो दृष्ट्वा बीजानि भक्तितः ।
क्रयेण [3]पञ्चषान् गृह्य पितृप्रीत्यै बुभुक्षितः ॥ ९९६ ॥
स्वयं पत्न्या भक्षयित्वा पितृतृप्तिं चकार ह ।
तावन्मात्रेण ते चापि परं तृप्ताः शताब्दकात् ॥ ९९७ ॥
आनन्दसागरे मग्ना बभूवुरिति नः श्रुतम् ।
पुरा कुशवने पुण्ये माण्डव्यो वेदवित्तमः ॥ ९९८ ॥
महाविन्ध्याटवीमार्गे पनसं कार्तिकेऽवशात् ।
[4]दृष्ट्वार्कं च नतस्तूष्णीं समालोच्य क्षणात्परम् ॥ ९९९ ॥
तत्पत्राणि पवित्राणि पतितानि भुवः स्थले ।
दृष्ट्वा समादायैतानि निपुणः सर्वकर्मसु ॥ ९६० ॥
तानि स्वकरतः शीघ्रं कृत्वा पत्रपुटं त्वरन् ।
कस्मैचिद्विप्रपुत्राय पात्राय जलकांक्षिणे ॥ ९६१ ॥
समुद्युक्ताय पातुं तज्जलं भूमिगतं कथम् ।
पास्यामि[5] सलिलं वेति समालोकयतेतराम् ॥ ९६२ ॥
पिबत्यनेकतरसा पितृप्रीत्यै [6]पितॄन् महान् ।
स्मृत्वा ददौ तदा तेऽपि समागत्यातिसत्वरम् ॥ ९६३ ॥

[1] ते for वै—ङ, च.
[2] पितरो दृष्ट्वा—क, ख; प्रीतो दृष्ट्वा—घ.
[3] पञ्चषड् गृह्य—क, ख.
[4] दृष्ट्वा कश्च नतस्तूष्णीं—क, ख, ङ, च.
[5] पश्यामि—क, ख.
[6] पितुर्महान्—क, ख.

तावन्मात्रेण संतुष्टा गयाश्राद्धशताधिकात् ।
अतिहर्षं गताः सद्यस्तमेनं भूरितेजसम् ॥ १६४ ॥
आशीर्भिश्च प्रशस्ताभिः [1]प्रत्यक्षेणैनमीक्ष्य ते ।
परं [2]तृप्ताः स्मेति [3]चोक्त्वा त्वं कृतार्थो महानसि ॥ १६५ ॥
शास्त्रार्थधर्मतत्त्वज्ञस्त्वमस्मत्परितृप्तिकृत्[4] ।
इत्युक्त्वाऽऽभाष्य ते तेन तत्पदं चक्रपाणिनः ॥ १६६ ॥
पश्यतस्तस्य पुरतो जग्मुः किल सुरोत्तमैः ।
प्रार्थनीयं विशेषेण सोऽयमेतादृशो महान् ॥ १६७ ॥
पितॄणां पनसः श्रीमान् वल्लभः परमो महान् ।
कारश्च कारवल्लीकः कारुकः कालिको करुत् ॥ १६८ ॥
पञ्चैते ब्रह्मपुरतो देवानां शृण्वतां [5]तदा ।
इदमूचुर्वचो दुःखादस्माकमपि सन्ति हि ॥ १६९ ॥
कण्टकानि ततो भूयः खराणि सुमहान्त्यपि ।
त्वमस्माकं [6]तु तत्साम्यं किमर्थं नाकरोर्विभो ॥ १७० ॥
इत्येवमतिदैन्येन [7]पौनःपुन्येन केवलम् ।
रुरुदुः किल दुःखार्तास्तानेतांस्तादृशान्विभुः ॥ १७१ ॥
नाकिनां पुरतो भूयः प्रहसन् वाक्यमब्रवीत् ।

### रोदनम्

यन्माहात्म्यसुमहतो जन्मसिद्धातिसुश्रियः ॥ १७२ ॥
दृष्ट्वा विभूतिं[8] परमामसहन्नेव केवलम् ।

[1] प्रत्यक्षेणैवमीक्ष्य—क, ख, ङ, च.
[2] तृप्ताश्चेति—घ.
[3] प्रोक्त्वा—क, ख.
[4] परतृप्तिकृत्—क, ख.
[5] तथा—ङ, च.
[6] ततः साम्यं—क, ख.
[7] पुनः पुण्येन—क, ख.
[8] दृष्ट्वातिभूतिं—क, ख.

तत्साम्यमिच्छुरारान्मे रोदनं कृतवानसि ॥ ९७३ ॥
तस्मादेतत्प्रभृति ते[1] भुवने ये दरिद्रतः ।
श्राद्धैककरणाशक्ता [2]अष्टोत्तरशतेष्वपि ॥ ९७४ ॥
श्राद्धेषु केषुचित्कालविशेषेषु [3]कथंचन ।
रोदनाच्छ्राद्धकरणफलं ते प्राप्नुयुः परम् ॥ ९७५ ॥

कारस्य श्लाघ्यत्वम्

[4]यस्मादत्यम्लवचनं मत्पुरः प्रोक्तवानसि ।[5]
[6]देवानां शृण्वतां चापि तस्मात्त्वं श्राद्धकर्मसु ॥ ९७६ ॥
नित्याम्लयुक्तो वर्तस्व कार रे रे कृती भव ।
कारवल्ल्यादयो यूयं स्वेषां कण्टकसाम्यतः ॥ ९७७ ॥
तत्साम्यचेतसो यस्मादङ्गीकुर्मश्च[7] सांप्रतम् ।
युष्मान् श्राद्धेषु सर्वेषु तद्योग्या भवतैव वै ॥ ९७८ ॥
तत्साम्यं तत्त्रयस्यैव मिलित्वैव पृथङ् न तु ।
नित्यं शाकसहस्रस्य बृहत्यादेस्तु वो न तु ॥ ९७९ ॥
युष्माकं श्राद्धयोग्यत्वमात्रं [8]मद्वचसा मतम् ।
सकण्टकबृहत्यस्ता मनसा पूर्वमेव वै ॥ ९८० ॥
साम्यं कण्टकतस्तस्य पनसस्य त्वकामयन् ।
युष्मदीयमिमं वृत्तं ज्ञात्वा तूष्णीं व्यवस्थिताः ॥ ९८१ ॥

1 एते for ते—क, ख.
2 अष्टोत्तरशतैरपि—ङ, घ.
3 कथं पुनः—क, ख.
4 तस्माद्—च, ङ, घ.
5 च adds two lines after this :

तस्मादेतत्प्रभृति ते भुवने ये दरिद्रतः ।
श्राद्धे करणदेवानां तस्मात्त्वं श्राद्धकर्मसु ॥

6 च omits this line.
7 स्म for च—घ.
8 मद्वचनान्मतम्—क, ख ; मद्वचसामिदम्—ङ, च.

अतिचातुर्यतोऽतीव निपुणाश्च विचक्षणाः ।
ज्ञात्वा तद्धृदयं सर्वमवलेपं तथाविधम् ॥ १८२ ॥
[1]सर्वं ज्ञात्वा विधास्यामि लोकेष्वद्य च श्रूयताम् ।
मन्वादिषु मदीयेषु युगादिषु चतुर्ष्वपि ॥ १८३ ॥
अष्टकासु च पुण्यासु संक्रान्तिषु च वृद्धिके ।
नैमित्तिके च तासां स्यादयोग्यत्वं तथाविधम् ॥ १८४ ॥
तत्र चैतासु याः क्रूराः प्रेतकर्मणि ताः पराः ।
संभवन्तु न चान्येषु मर्यादैवं मया कृता ॥ १८५ ॥

उर्वारुमहिमा

एतस्मिन्नन्तरे तत्र देवसृष्टोऽतिसुन्दरः ।
पत्रपुष्पमहावल्लीशलाटुफलसंवृतः ॥ १८६ ॥
समागत्यातिचपलात् कैलासाद्धरणीधरात् ।
नत्वा बद्धाञ्जलिपुटश्चोर्वारुर्मम का गतिः ॥ १८७ ॥
इति चोवाच लोकेशं भगवन्तं पितामहम् ।
तादृशं तं समुद्वीक्ष्य गौरीवाक्येन केवलम् ॥ १८८ ॥
शम्भुना लोकनाथेन सृष्टं शुद्धैकविग्रहम् ।
समागतं महाप्रह्वं महागुरुषु वत्सलम् ॥ १८९ ॥
शुद्धसत्वं [2]दूरगर्वं ज्ञात्वा तं सर्वसुन्दरम् ।
[3]अतिप्रशस्यं चोवाच देवानां पुरतो विभुः ॥ १९० ॥
त्वमुर्वारो स्थाणुसृष्टो भवानीवचसा यतः ।
स्वयं प्रकृत्या च महान् शान्तो दान्तो महामनाः ॥ १९१ ॥
गुरुप्रियो विनीतश्च सततं गुरुवत्सलः ।

[1] The following four lines are omitted by घ.
[2] भूतगर्वं—घ.
[3] अतिप्रशस्य चो—च, क, घ.

अवलेपैकरहितश्चाद्यप्रभृति भूतले ॥ ५९२ ॥
दैविकेषु च पित्र्येषु कल्याणेषु नवेषु च ।
नैमित्तिकेषु नित्येषु काम्येषु सकलेष्वपि ॥ ५९३ ॥
कृत्स्नक्रियाविशेषेषु बालवृद्धातुरादिषु ।
नित्ययुक्तः सदा योग्यः शलाटूनां दशासु च ॥ ५९४ ॥
दशास्वेवं फलानां च शाश्वतो भव शाश्वतः ।
पितॄणां सर्वदात्यन्तं वल्लभः परमो भव ॥ ५९५ ॥
वसन्तमाधवस्य त्वं ग्रीष्ममृत्युंजयस्य च ।
महावर्षाः सप्ततन्तुः [1]शरत्काल्यस्तथा पुनः ॥ ५९६ ॥
हेमन्तवनराजन्यः शिशिरः शीतलः शिवः ।
सुखाकरः शुभकरो नित्यकल्याणकारकः ॥ ५९७ ॥
प्रथितो भव सर्वेषां पानसैराम्रकैः शिवैः ।
रम्भाभिस्तुलितो भूयः कदाचिदधिकस्तथा ॥ ५९८ ॥
विद्वत्स्तुत्यो[2] राजमान्यो त्वज्जातीयकषोडशैः ।
संग्राह्यो भव सर्वत्र सर्वनेत्रप्रियोऽनिशम् ॥ ५९९ ॥
सर्वदा सर्वसंवृद्धो भवोर्वारोऽतिवर्धितः ।
मरुत्क्रतौ तु [3]त्वद्बीजविक्षेपणमुखादितः ॥ ६०० ॥
फलबीजसमुत्पत्तिपर्यन्तं किल सर्वदा ।
तदिष्टित्रयतः शुद्धो[4] महान्मन्त्रपरिष्कृतः[5] ॥ ६०१ ॥
त्रयस्त्रिंशत्कोटिसंख्यदेवानां वल्लभो भव ।
इति स्तुतः पूजितश्च शासितो विहितोऽनघः ॥ ६०२ ॥

[1] शरत्कालस्तथा—घ.
[2] विद्वत्स्तुतो—घ.
[3] त्वद्बीजनिक्षेपणमुखादितः—ङ, घ.
[4] सिद्धो—च, ङ, घ.
[5] परिष्कृतः—च, ङ.

अत्यन्तपितृतृप्त्यैककारकः किल कारितः ।
उर्वारुस्तादृशः प्रोक्तः संग्राह्यः श्राद्धकर्मसु ॥ ६०३ ॥

उर्वारुत्यागे दोषः

तादृशं तमिमं यो वै मौढ्याच्छ्राद्धेषु संत्यजेत् ।
सद्य एव पितुर्द्रोही[1] भवेदेव न संशयः ॥ ६०४ ॥
देवद्रोही श्रुतिद्रोही सर्वद्रोही स एव हि ।
विधिघ्नः श्राद्धहन्ता स्यात्तानीमानि प्रवक्ष्यतः ॥ ६०५ ॥

षण्णवतिश्राद्धानि

अमामनुयुगक्रान्तिधृतिपात[2]महालयाः ।
तिस्रोऽष्टका गजच्छाया षण्णवत्यः प्रकीर्तिताः ॥ ६०६ ॥
मासिश्राद्धानि तान्येवं मासि मासि कृतानि वै ।
अष्टोत्तरशतानि स्युस्तानीमानि ततः पुनः ॥ ६०७ ॥
पित्रोर्मृताहः कथितोऽलङ्घनीयः कथंचन ।
रविं च प्रथमे पादे कविं चैव द्वितीयके ॥ ६०८ ॥
त्रयोदश तृतीये स्यादमाव्याख्यानमुच्यते ।
पुनर्निरूप्यते स्पष्टममावाक्यस्य सांप्रतम् ॥ ६०९ ॥
अमावास्या द्वादश स्युर्मनवस्तु चतुर्दश ।
युगादयश्च चत्वारः क्रान्तयो द्वादश स्मृताः ॥ ६१० ॥
धृतयश्चापि पाताश्च त्रयोदश त्रयोदश ।
महालयाः पञ्चदश अष्टका द्वादश स्मृताः ॥ ६११ ॥
गजच्छाया तथा चैका षण्णवत्य इतीरिताः ।
प्रतिमासं प्रकर्तव्यत्वेन तानि च सांप्रतम् ॥ ६१२ ॥

[1] पितृद्रोही—ङ, घ.
[2] व्यतीपात for धृतिपात—क, ख, घ.

कीर्तितानि द्वादश हि मिलित्वैतेऽखिलान्यपि ।
अष्टोत्तरशतानि स्युः श्राद्धानि विहितानि वै ॥ ६१३ ॥
प्रतिवर्षं प्रयत्नेन ब्राह्मणस्य महात्मनः ।
अमावास्यास्तत्र क्लृप्ता मासान्ता नित्यमेव वै ॥ ६१४ ॥
अत्रैव पितृयज्ञश्च कर्तव्यत्वेन चोदितः ।
[1]श्रुत्युक्तोऽयं पितॄणां [2]स्यादतितृप्त्यैककारकः ॥ ६१५ ॥
श्राद्धानां प्रकृतित्वेन चोदितः स्मृतिकर्तृभिः
नैतस्मात्तु परं[3] श्राद्धं विद्यते यत्र कुत्रचित् ॥ ६१६ ॥
श्रुत्युक्तमेतदेव स्यादेतन्मात्रे कृते तु चेत् ।
सर्वाण्यपि कृतानि [4]स्युरथवैतद्दिने तु यैः ॥ ६१७ ॥
श्राद्धं वै क्रियते तद्वा प्रकृतिश्चेति वै जगुः ।
[5]इतरैः सर्वपित्र्याणां श्रुतितो ब्रह्मवादिनः ॥ ६१८ ॥
यदनुष्ठानतः सर्वानुष्ठानं जायतेतराम् ।
तदेव प्रकृतिः प्रोक्ता हि कैश्चिद्ब्रह्मवादिभिः ॥ ६१९ ॥

## दर्शश्राद्धम्

दर्शानुष्ठानतः सर्वश्राद्धानि स्युः कृतानि वै ।
इति सर्वे त्रयो लोकास्तूष्णीं तिष्ठन्ति केवलम् ॥ ६२० ॥
न केनापि च तस्मात्तु दर्शः संत्यज्यते परः ।
दर्शमात्रेऽनुष्ठितेऽस्मिन् येन केन प्रकारतः ॥ ६२१ ॥
सर्वाण्यनुष्ठितानि स्युरिति वै लोकसंस्थितिः ।
न तत्र साक्षाच्छ्राद्धं च क्रियते येन केन वा ॥ ६२२ ॥

[1] इत्युक्तोऽयं—घ. [2] स्याद्दततृप्त्यैककारकः—क, ख.
[3] वरं—क, ख. [4] स्युरथैवैतद्दिनेषु यः—घ ; स्युरथेवैतद्दिने तु यः—ङ, च.
[5] इदं वै—च, ङ.

क्रियते कृतिना तत्तु [1]भूतले येन केनचित् ।
[2]तेनाप्युदकमात्रेण श्राद्धेनापि कृतेन वै ॥ ६२३ ॥
सर्वाण्यपि कृतान्येवेत्येवं सर्वैकनिश्चयः ।
स दर्शस्तादृशस्यानुष्ठाता यो ब्राह्मणोत्तमः ॥ ६२४ ॥
अग्निहोत्री स एव स्याद्दर्शयाज्यक्षयाज्यपि ।
सोमयाजी सर्वयाजी तत्त्यागी ब्रह्मघातकः ॥ ६२५ ॥
स एव कर्मचण्डालस्तमेनं ब्रह्मघातकम् ।
दृष्ट्वा समागतं पापं वाङ्मात्रेणापि नार्चयेत् ॥ ६२६ ॥
प्रकृतिश्राद्धमात्रश्च दर्श एव न चापरः ।
पितृयज्ञमुखादेव प्रकृतित्वं तदीरितम् ॥ ६२७ ॥
तत्रैव विहितोऽयं हि पितृयज्ञः श्रुतीरितः ।

दर्शाब्दिकौ तुल्यौ

दर्शो मृताहश्च समौ न कदाचित्तु शक्यते ॥ ६२८ ॥
येन केनापि वा त्यक्तुं तत्त्यागी चेत्पतत्यधः ।
पित्रोर्मृताहस्त्वन्नेन कार्यः स्यात्तु न चान्यतः ॥ ६२९ ॥
न हेम्नान्नेन होमेन पिण्डदानेन मन्त्रतः ।
[3]अक्षेण शष्पैर्मन्त्रैर्वा न दुःखेन [4]तदाचरेत् ॥ ६३० ॥
किं त्वग्नौकरणाद्ब्रह्मभोजनात्पिण्डदानतः ।
कृतं भवति तत्कर्म न चेच्चण्डालतां व्रजेत् ॥ ६३१ ॥

दर्शाब्दिकौ न त्याज्यौ

मृताहोऽलङ्घनीयः स्याद्दर्शश्चापि तथाविधः ।

[1] प्रतिष्ठा—च, ङ. [2] तेनाप्युदकमात्रैकश्राद्धेनापि—क, ख, ङ, च.
[3] कार्त्स्न्येण—क, ख ; कार्त्स्न्यैण—च, ङ ; कृत्स्नेण—घ.
[4] समाचरेत्—ङ, च.

येन केन प्रकारेण शक्यते किल दुर्बलैः ॥ ६३२ ॥
अकिंचनैर्दुर्बलैर्वा व्याधितैर्वा विशेषतः ।
बाधितैर्धावमानैर्वाऽज्ञातवासिभिरेव वै ॥ ६३३ ॥
[1]नष्टक्रियैर्नष्टधनैर्मृतप्रायैरथापि वा ।
त्युक्तुं न शक्यते श्राद्धं मृताहाख्यं कथंचन ॥ ६३४ ॥
मृताहस्तादृशः क्लृप्तः प्रतिवर्षं च चान्द्रतः ।
मानेनैव भवेन्नूनमक्लृप्तोऽन्येन [2]चेद्भवेत् ॥ ६३५ ॥
अत्यन्तावश्यको न स्यादक्लृप्तश्चेत्तु यो भवेत् ।
[3]क्लृप्तस्यावृत्तिरित्येव मर्यादा शास्त्रसंमता ॥ ६३६ ॥
तिथ्यग्नी न तिथिस्तिथ्याशे कृष्णेभोऽनलो ग्रहाः ।
तिथ्यर्कौ न शिवोऽश्वोऽमातिथी मन्वादयः स्मृताः ॥ ६३७ ॥
तस्मात्तु क्लृप्ता इत्युक्तास्ततश्च क्रान्तयः स्मृताः ।
सूर्यराशिक्रमणतश्चाऽक्लृप्ता इत्युदीरिताः ॥ ६३८ ॥

### संक्रान्तिस्वरूपम्

अयने द्वे च विषुवौ चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रमा द्वादश स्मृताः ॥ ६३९ ॥
स्थिरभेष्वर्कसंक्रान्तिर्ज्ञेया विष्णुपदाह्वया[4] ।
षडशीतिमुखं ज्ञेयं द्विःस्वभावेषु राशिषु ॥ ६४० ॥
सौम्ययाम्यायने नूनं भवतो मृगकर्कटौ ।
तुलामेषोभयं ज्ञेयं विषुवं सूर्यसंक्रमे ॥ ३४१ ॥

### संक्रान्तिपुण्यकालः

अहःसंक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ।

[1] नष्टश्रीकैः—घ.
[2] केनचित्—घ.
[3] क्लृप्तस्य वृत्तिरित्येव—घ.
[4] विष्णुपदान्विता—क, ख.

रात्रौ संक्रमणे भानोर्व्यवस्था [1]सर्वकर्मसु ॥ ६४२ ॥
सौम्ययाम्यायनद्वन्द्वे विशेष इति वै जगुः ।
अतीत्याप्राप्य तत्कालं पुण्यकाल उदाहृतः ॥ ६४३ ॥
संक्रान्तिष्वखिलास्वेवं तत्कालः पुण्यदः स्मृतः ।
या याः सन्निहिताः [2]नाड्यस्तास्ताः पुण्यतमाः स्मृताः ॥६४४॥
अयने द्वे च विषुवे चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रमा द्वादश स्मृताः ॥ ६४५ ॥
त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः ।
वर्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥ ६४६ ॥
षडशीत्यां व्यतीतायां [3]षष्टिरुक्ताः प्रणाडिकाः ।
पुण्यायां विष्णुपद्यां च प्राक् पश्चादपि षोडश ॥ ६४७ ॥
[4]अर्धरात्रात्तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेव दिने कुर्यादुत्तरायण एव वै ॥ ६४८ ॥

## अन्नश्राद्धे कुतपः

यद्यत्तु पैतृकं कर्म श्राद्धमन्नेन चेत्पुनः ।
कुतपे तद्धि कुर्वीत तद्भिन्नस्य तु चेदयम् ॥ ६४९ ॥
विधिः ख्यातो न सन्देहो धर्मविद्भिः सनातनैः ।
ओदनश्राद्धमात्रस्य संक्रान्तीनां च कृत्स्नशः ॥ ६५० ॥
द्वादशानां [5]तथान्येषां कुतपो मुख्य उच्यते ।
तद्भिन्नस्नानदानादितर्पणादिषु ते स्मृताः ॥ ६५१ ॥
तदा तदा तु विहिता एते[6] कालविशेषकाः ।

[1] सर्वसंक्रमे—च, ङ.
[2] सद्यः for नाड्यः—क, ख, घ.
[3] षष्टिरुक्तास्तु नाडिकाः—घ.
[4] अथ रात्रौ तदूर्ध्वं वा—क, ख, च, ङ.
[5] तदन्येषां—च.
[6] ये ये for एते—च, ङ.

श्राद्धकर्तुस्तु सर्वत्र कुतिनः काल एककः ॥ ६९२ ॥
कुतपो वेदवचसा मुख्यः प्रोक्तो न चेतरः ।
सोऽपि यस्मिन् दिने सम्यग्दक्षिणायनकालकः ॥ ६९३ ॥
तमुत्तरायणे कुर्यादुत्तरायणमेव [1]हि ।
कुतपस्य तु यत्र [2]स्याल्लोभपूर्वं तथाचरेत् ॥ ६९४ ॥

## दर्शसंक्रान्त्यादिश्राद्धानि

[3]तत्क्रान्तियुग्मश्राद्धादिकृत्यं सर्वं यथा लभेत् ।
औत्तरे ह्ययने सम्यक् कुतपेऽस्मिन् तथाऽऽचरेत् ॥ ६९५ ॥
संक्रान्तिमात्राः कथिता अक्लृप्ता इति सूरिभिः ।
एवं धृतिश्च पातश्च षड्विंशतिकसंख्यया ॥ ६९६ ॥
कथिताः किल सर्वाण्यप्यक्लृप्तान्येव केवलम् ।

## महालयः

महालया बहुविधाः पूर्वं पञ्चदशेति वै ॥ ६९७
षोडशैवेति केचित्तु दशेति च तथापरे ।
पञ्चैवेति त्रयं चेति एकमेवेति केचन ॥ ६९८ ।
[4]षोढा ताः कथिताः सद्भिरष्टका द्वादश स्मृताः ।
यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ॥ ६९९ ॥
याम्या तिथिर्भवेत्सा तु गजच्छाया प्रकीर्तिता ।

## श्राद्धदेवताः

कर्माणि कानि ख्यातानि त्रिदैवत्यानि केवलम् ॥ ६६० ॥
षड्दैवत्यानि कानि स्युर्नवदैवत्यकानि च ।

[1] च for हि—ङ.  [2] स्याल्लाभपूर्वं—क, ख, ङ, च.
[3] यत् for तत्—क, ख, ङ, च.  [4] घ omits the following four lines.

तत्रादौ तु त्रिदैवत्यं मृताहस्त्वेक उच्यते ॥ ६६१ ॥
षड्दैवत्यस्तु दर्शः स्यादष्टका नवदेवताः ।
अष्टकासु च वृद्धौ च गयायां च मृतेऽहनि ॥ ६६२ ॥
मातुः श्राद्धं पृथक् कुर्यादन्यत्र पतिना सह ।
पतिना सह कर्तव्यं पृथक्त्वेन कृते यदि ॥ ६६३ ॥
तत्पैतृकमहासङ्गसौख्यविघ्नकरं भवेत् ।
पितृवर्गस्तु पूर्वं स्यान्मातृवर्गस्ततः परम् ॥ ६६४ ॥
ततो मातामहानां च वर्गोऽयं तत्कलत्रतः ।

### पित्र्येऽप्रदक्षिणम्, शून्यललाटता च

पितृवर्गो यत्र पूर्वं तत्र स्यादप्रदक्षिणम् ॥ ६६५ ॥
अपसव्यं तथा शून्यललाटं प्रभवेदपि ।
यत्र यत्राऽपसव्यं स्यात्तत्र तत्राऽप्रदक्षिणम् ॥ ६६६ ॥
तथा शून्यललाटं च प्रधानाङ्गे च तत्स्मृतम् ।

### तत्र गृहालंकारो न कर्तव्यः

यत्रैतत्त्रितयं तत्र गृहालंकरणं न तु ॥ ६६७ ॥

### मातृवर्गे प्रदक्षिणादि

मातृवर्गो यत्र पूर्वं तत्र स्यात्तु प्रदक्षिणम् ।
सव्यं पुण्ड्रललाटं च मङ्गलस्नानमेव च ॥ ६६८ ॥
गृहालंकरणं चापि मङ्गलानि तथा पुनः ।
पितॄणां च क्रमो मुख्यो भवत्यपि च सन्ततम् ॥ ६६९ ॥
प्रपितामहपूर्वं स्यात्तत्पितामहमध्यकम् ।
पित्रन्त एव कथितं तदुच्चारणलक्षणम् ॥ ६७० ॥

### श्राद्धभेदेन विश्वेदेवाः

तेषां च विश्वेदेवास्ते सत्यसंज्ञिकनामकाः ।
सर्वत्र वृद्धशब्दश्च प्रयोक्तव्यश्चतुर्ष्वपि ॥ ६७१ ॥
तथैव मातृवर्गेऽपि तार्तीयीके च वर्गके ।
जननक्रमतश्चेदं[1] तेषामुच्चारणं भवेत् ॥ ६७२ ॥
एतद्विरुद्धं तत्सर्वं तद्विरुद्धमिदं परम् ।
निःशेषमिति बोद्धव्यं ते सर्वे देवताः किल ॥ ६७३ ॥
वसवः [2]पितरोऽत्र स्यू रुद्राश्चापि पितामहाः ।
प्रपितामहाश्च कथिता आदित्या इति तद्गणाः ॥ ६७४ ॥

### सापिण्ड्यनिरूपणम्

एतत्त्रयात्पूर्वकस्य चतुर्थस्य सकृत्किल ।
श्राद्धस्य करणं प्रोक्तं पाथेयाख्यस्य सूरिभिः ॥ ६७५ ॥
तदेवं [3]सप्तपूर्षाख्यं सापिण्ड्यस्य निरूपणम् ।

### आशौचं च दशत्रिदिनमेकदिनम्

[4]तावत्तु सूतकं सर्वं तज्जानां संप्रकीर्तितम् ॥ ६७६ ॥
समानोदकसंज्ञाश्च ततो भूयः सगोत्रिणः ।
तदूर्ध्वमिति विज्ञेयं तेषां तत्सूतकं ततः ॥ ६७७ ॥
त्रिदिनं चैकदिवसं पश्चात्स्नानं च [5]बोधितम् ।
[6]क्रमेणैव परं यावत्तावत्पर्यन्तमेव वै ॥ ६७८ ॥
स्नानमात्रं [7]च कथितं प्रसंगादिदमीरितम् ।

[1] एवं for इदं—ङ, घ.
[2] पितरस्तस्य—च.
[3] सप्तपुरुषाख्यं—ङ; सप्त पूर्वाख्यं—क, ख.
[4] The following five lines are omitted by क and ख.
[5] चोदितम्—घ.
[6] क्रमेचैव—च.
[7] प्रकथितं—घ.

[1]जीवच्छ्राद्धं तु [2]तत्प्रोक्तं सर्वश्राद्धविलक्षणम् ॥ ६७९ ॥
चत्वारिंशद्देवताकमथवा पञ्चसंख्यया ।
पुनः समेतं तत्प्रोचुरतस्तद्द्विविधं स्मृतम् ॥ ६८० ॥
श्राद्धानि कानिचिद्भूयो देवतासहितान्यपि ।
[3]अदैविकानि च पुनस्तानीमानि च भण्यते ॥ ६८१ ॥
वृद्धिश्राद्धं गयाश्राद्धं घृतश्राद्धं तथैव च ।
[4]दधिश्राद्धं तृणश्राद्धममादीन्यखिलान्यपि ॥ ६८२ ॥
[5]सदैविकानि ख्यातानि प्रेतश्राद्धानि कृत्स्नशः ।
[6]अदैविकानि प्रोक्तानि सोदकुम्भानि कृत्स्नशः ॥ ६८३ ॥

### अमादिश्राद्धे कर्तव्यानि

प्रेतश्राद्धेषु सर्वत्र संकल्पो मुख्यतः स्मृतः ।
अभ्यनुज्ञापि परमा [7]सा चात्राऽऽवाहनं मतम् ॥ ६८४ ॥
[8]सपाद्यार्घ्यगन्धधूपदीपपुष्पाणि केवलाः ।
तिलाः सर्वत्र तूष्णीकाः [9]कृत्स्नं वेदमन्तुं विना ॥ ६८५ ॥
तत्र पूजा प्रकर्तव्या पिण्डदानं च दक्षिणा ।
आवश्यक्यत्र परमा दध्याज्ये वस्त्रमेव च ॥ ६८६ ॥
पूर्वाह्ण एव कुर्वीत कुतपं नावलोकयेत् ।
[10]पिण्डानि वायसेभ्यो वा गृध्रेभ्यो वा निवेदयेत् ॥ ६८७ ॥

[1] जीवश्राद्धं—All Mss.
[2] यत्प्रोक्तं—घ.
[3] अवैदिकानि—ङ, च.
[4] पथिश्राद्धं—घ.
[5] न दैविकानि—क, ख, ङ, च.
[6] Line omitted by क and ख.
[7] न चात्रावाहनं—क, ख.
[8] न पाद्यार्घ्ये—क, ख; न पाद्यार्घ्यैः—घ; सपाद्यार्घ्यौ गन्धधूपः—ङ.
[9] कृत्स्नवेदमन्तुं—क, ख, च.
[10] घ omits two quarter verses in the middle and reads: पिण्डानि वायसेभ्यो वा नान्यत्र तु विनिक्षिपेत् ।

न चेज्जलचरेभ्यो वा नान्यत्र तु विनिक्षिपेत् ।

एकोद्दिष्टाधिकारिणः

भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥ ६८८ ॥
मित्राय गुरवे श्राद्धं [1]पितुर्मातुः स्वसुस्तथा ।
श्वशुराय श्यालकाय चैकोद्दिष्टं न पार्वणम् ॥ ६८९ ॥

अपिण्डकानि सपिण्डकानि च श्राद्धानि

युगक्रान्तिमनुश्राद्धं [2]प्रेतश्राद्धादिकं तथा ।
अपिण्डकानि ख्यातानि सपिण्डानीतराणि च ६९० ॥
महालयषोडशत्वे गजच्छायाऽत्र नो भवेत् ।
[3]षण्णवत्यत्वसंख्यायै सा हि पञ्चदशत्वतः ॥ ६९१ ॥
यया कया संख्यया वा तया षड्विधया भवेत् ।
महालयत्वस्य सिद्धिर्विशेषे तु फलं तथा ॥ ६९२ ॥
सर्वत्रैवं समाख्याता प्रयासाधिक्यतः फलम् ।
प्रभवत्येव सुमहन्नात्र कार्या विचारणा ॥ ६९३ ॥

महालयः

महालयः पाक्षिकोऽयं द्विविधः परिकीर्तितः ।
एकविप्रानेकविप्रभेदेन किल तत्र वै ॥ ६९४ ॥
[4]एकविप्राख्यपक्षस्य स्वरूपं वच्मि पूर्वतः ।
महालयानां सर्वेषामापक्षान्तस्य केवलम् ॥ ६९५ ॥
ये वृताः प्रथमदिवसे वान्येषां च केवलम् ।

[1] पितुर्मातृष्वसुस्तथा—च, घ ; पितृमातृष्वसुस्तथा—क, ङ.
[2] प्रीतिश्राद्धादिकं—ङ, घ.
[3] षण्णवत्यस्य—ङ, च.
[4] एकविप्रद्विपक्षस्य—क, ख.

11

त एव नान्ये कर्तव्याः पक्षान्ते श्राद्धदक्षिणा ॥ ६९६ ॥
एकदैव हि [1]देया स्यान्न देया स्यात्तदा तदा ।
अनेकविप्रपक्षे तु प्रतिनित्यं च बाडबाः ॥ ६९७ ॥
[2]भिन्नभिन्नाः प्रकर्तव्याः प्रतिनित्यं पृथक् पृथक् ।
दक्षिणा च प्रदातव्या प्रतिपूर्षं पृथक् पृथक् ॥ ६९८ ॥
प्रतिवर्गं न चेद्विप्रा वरणीया विधानतः ।
षड्दैवत्यं तु सर्वत्र नवदैवत्यमेव वा ॥ ६९९ ॥
ख्यातो महालयः सद्भिः षड्विधोऽपि महालयः ।
एवमेव प्रकर्तव्यो नान्यथा तं समाचरेत् ॥ ७०० ॥

सकृन्महालयः

चरेद्यदि विशेषेण नानादैवतकेन वै ।
सकृन्महालयः सोऽयं [3]स भवेत्किं तु [4]स स्मृतः ॥ ७०१ ॥
गयाश्राद्धसमः कोऽपि[5] कथितः परमो महान् ।
अनिर्वाच्योऽखिलैः शास्त्रैर्महाश्राद्धविशेषकः ॥ ७०२ ॥
तादृशश्राद्धकर्ताऽपि षड्दैवत्येन संयुतम् ।
नवदैवतकेनापि विष्णुना वा समन्वितम् ॥ ७०३ ॥
[6]धुरिलोचनसंयुक्तं कुर्याच्छ्राद्धं महालयम् ।
सकृत्पक्षेण वा पूर्वप्रोक्तपक्षेषु [7]येन वा ॥ ७०४ ॥
पक्षेण केनचित्कुर्यात् स महालयकृद्भवेत् ।
न चेदयं गयाश्राद्धतुलितं यं च कंचन ॥ ७०५ ॥
पुण्यं श्राद्धविशेषं वै कुर्यादेवेति सा श्रुतिः ।

[1] देयान्या न देया—क, ख, ङ, च. [2] भिन्नाभिन्नाः—क.
[3] न for स—ङ, घ. [4] न for स—क, ख ; सत्कृतः—घ.
[5] कोटि for कोऽपि—घ. [6] धुनीलोचनसंयुक्तं—ङ. [7] वा न वा—क, ख.

महालयस्य भरण्यादीनां श्लाघ्यत्वम्

दिने दिने गयातुल्यं भरण्यां [1]गयपञ्चकम् ॥ ७०६ ॥
दशतुल्यं व्यतीपाते पक्षमध्ये तु विंशतिः ।
द्वादश्यां शतमित्याहुरमायां तु सहस्रकम् ॥ ७०७ ॥

महालयकालः

[2]आषाढीमवधिं कृत्वा यस्याः पक्षस्तु पञ्चमः ।
महालय इति प्रोक्तः पितॄणां श्राद्धसंपदे ॥ ७०८ ॥

यतिनां महालयः

तत्र पक्षे यतीनां तु द्वादश्यां श्राद्धमाचरेत् ।

दुर्मृतानाम्

चतुर्दश्यां विशेषेण दुर्मृतानां चरेत्क्रियाम् ॥ ७०९ ॥

सुमङ्गल्याः

सुमङ्गलीनां कथितं नवम्यां श्राद्धमेककम् ।
[3]अश्रोत्रियकलत्राणां यावत्तद्भर्तृवर्तनम् ॥ ७१० ॥
प्राणिलोके ततस्तत्तु कुर्याद्वा न तु वा द्वयम् ।
एतदस्ति ह्यनुष्ठानं सकृन्महालये तु चेत् ॥ ७११ ॥
[4]यावत्पैतृकधर्माः स्युस्तुलितस्तेन [5]स स्मृतः ।
अतीतो यदि पक्षः स तद्भिन्नेऽपरपक्षके[6] ॥ ७१२ ॥
तदन्यस्मिन् तादृशे वै तदन्यस्मिन् तथाविधे ।
यावत्तु वृश्चिकस्तिष्ठेत् तावत्तत्तु समाचरेत् ॥ ७१३ ॥

[1] गयपञ्चके—क, ख, ङ, च.
[2] आषाढमवधिं—च.
[3] अगोत्रीयकलत्राणां—च.
[4] यावत्त्वैकत्वधर्माः—क, ख.
[5] नः स्मृतः—च ; सत्कृतः—घ.
[6] तद्भिन्नपरपक्षके—घ.

अदर्शने वृश्चिकस्य जाते [1]तत्पितरः परम् ।
धनुर्मासे तु संप्राप्ते श्राद्धाकरणमीक्ष्य वै ॥ ७१४ ॥
सद्यः शापप्रदानायोद्युक्ता एव भवन्ति वै ।
तावदेव ततो भक्त्या श्राद्धं महालयाख्यकम् ॥ ७१५ ॥
विधिनैव प्रकुर्वीत न चेद्दोषो महान् भवेत् ।
येन केन प्रकारेण [2]ततश्च श्राद्धमेककम् ॥ ७१६ ॥
कुर्यादेव पितुः श्राद्धतुल्यं प्रत्यब्दमेव वै ।

### महालये परेऽहनि तर्पणम्

प्रत्यब्दधर्मा निखिलाः सकृन्महालयस्य ते ॥ ७१७ ॥
भवेयुरेव तस्मात्तु परेऽहन्येव तर्पणम् ।
श्राद्धे यावन्त उद्दिष्टास्तत्परेऽहनि तान् यजेत ॥ ७१८ ॥

### रव्युदयात्पूर्वं तर्पणम्

तच्छेषतिलदर्भैस्तु पूर्वं सूर्योदयस्य वै ।
प्रनष्टपितृकश्चेत्तु तर्पणस्याधिकार्ययम् ॥ ७१९ ॥
स प्रनष्टप्रसूर्नित्यं तर्पणेऽधिकृतो भवेत् ।

### जीवत्पितृकश्राद्धम्

मासिश्राद्धे पितृयज्ञे नान्दीश्राद्धे च सन्ततम् ॥ ७२० ॥
जीवत्तातोऽपि कर्ता स्यादा होमात्करणं स्मृतम् ।
पूर्वद्वये तु सततं नान्दीश्राद्धं तु सर्वदा ॥ ७२१ ॥
येषामेव पिता दद्यात्तेभ्यो दद्यात्तु तत्सुतः ।

[1] तत्परतः—घ. [2] ततस्तच्छ्राद्धमेककम्—ङ.

ताते भ्रष्टे च संन्यस्ते रुग्णे रोगैकपीडिते ॥ ७२२ ॥
यत्कर्तव्यं तेन कर्म पैतृकं तत्सुतश्चरेत् ।

श्राद्धे वैदिकाग्न्यधिकारिणः

पित्रोः श्राद्धं स्वपत्न्याश्च सपत्नीमातुरेव च ॥ ७२३ ॥
मातामहस्य तत्पत्न्याः श्राद्धमौपासने भवेत् ।
तद्भिन्नानां तु सर्वेषां श्राद्धं स्याल्लौकिकानले ॥ ७२४ ॥
अपुत्राणां पितृव्यानां भ्रातॄणामग्रजन्मनाम् ।
तत्पत्नीनां च सर्वासां लौकिकाग्नौ [1]यथाविधि ॥ ७२५ ॥
अवश्यत्वेन कर्तव्यं न त्याज्यं धर्मतोऽखिलैः ।
प्रत्यब्दं श्राद्धमात्रं स्यात् पितृश्राद्धसमानतः ॥ ७२६ ॥

अष्टकामासिश्राद्धम्

माघकृष्णाष्टमी यस्यां रात्रौ कुर्यात्समन्त्रकम् ।
होमं दध्यञ्जलिस्तस्यापूपस्य स्थानके ततः ॥ ७२७ ॥
नवम्यां तु ततो भक्त्या श्राद्धं कुर्याद्विधानतः ।
मासिश्राद्धविधानेन तावन्मात्रेण केवलम् ॥ ७२८ ॥
तानि शिष्टानि सर्वाणि ह्येकादश किलाऽष्टकाः ।
कृता एव भवेन्नूनं लघूपायोऽयमुच्यते ॥ ७२९ ॥
अष्टकासु यथा दर्शश्राद्धतोऽखिलपैतृकाः ।
कृतप्राया इति तथा लघूपायः [2]प्रकीर्तितः ॥ ७३० ॥
सर्वाणि पृथगेव स्युः कार्याणि नियमेन वै ।
अष्टोत्तराणि ख्यातानि कदाचित्तु विशेषतः ॥ ७३१ ॥
असमर्थस्य तु प्रोक्तो लघूपायस्तु कश्चन ।

[1] विधीयते—घ.  [2] कृतस्तथा—घ.

समर्थस्तु यथाकल्पं प्रतिसंवत्सरं द्विजः ॥ ७३२ ॥
सर्वाणि कुर्याच्छ्राद्धानि न चेद्दोषश्च कीर्तितः ।

### श्राद्धप्रयोगः

श्राद्धप्रयोगश्च मया कृत्स्न एवोच्यतेऽधुना ॥ ७३३ ॥

### निमन्त्रणम्

निमन्त्रणं च पूर्वेद्युः प्रकर्तव्यं विधानतः ।

### निमन्त्रणार्हाः

विप्राणां वेदिनां नित्यं कार्यं नाऽवेदिनां तराम् ॥ ७३४ ॥
कुक्षौ तिष्ठति यस्यान्नं वेदाभ्यासेन जीर्यते ।
कुलं तारयते तेषां दश पूर्वान् दशाऽपरान् ॥ ७३५ ॥
वेदाध्यायी तु यो विप्रः सततं [1]ब्रह्मणि स्थितः ।
साचारः साग्निहोत्री च सोऽग्निर्वै कव्यवाहनः ॥ ७३६ ॥

### वेदहीननिमन्त्रणे

मन्त्रपूतं तु यच्छ्राद्धममन्त्राय [2]प्रयच्छति ।
तदन्नं तस्य कुक्षिस्थं रुदत्येव न संशयः ॥ ७३७ ॥
शपत्येनं प्रदातारं स्वस्य तं तादृशं किल ।
यजनं च प्रदातारं तदन्नं तद्धृदि स्थितम् ॥ ७३८ ॥
यावतः पिण्डान् खलु स प्राश्नाति [3]हविषोऽल्पकः ।
तावतः शूलान् ग्रसति प्राप्य वैवस्वतं यमम् ॥ ७३९ ॥
दातृहस्तं च छिन्दन्ति जिह्वाग्रमितरस्य च ।

[1] ब्राह्मणः—क.
[2] प्रदीयते—ङ, च.
[3] हविषोल्बकः—क, ख, च.

पश्यतश्चक्षुषी[1] चैव शृण्वतः श्रोत्रयुग्मकम् ॥ ७४० ॥
दुर्लभायां स्वशाखायां भोक्तॄनन्यान्निवेदयेत् ।

### स्वशाखीयः श्लाघ्यः

पित्रोः श्राद्धे विशेषेण स्वशाखीयान्निवेदयेत् ॥ ७४१ ॥
कन्यादानं पितृश्राद्धं शुद्धकच्छेभ्य एव च ।
प्रदेयं स्यात्प्रयत्नेन नासत्कच्छेभ्य एव वै ॥ ७४२ ॥

### अभोज्याः

रोगयुक्तं दुष्टबुद्धिं दुष्टचारित्रतत्परम् ।
सदोषकं च सद्वेषं कुनखं श्यावदन्तकम् ॥ ७४३ ॥
नित्याऽप्रयतवर्ष्माणं दुर्वर्णं च कुरूपिणम् ।
नक्षत्रजीवनं दासकृत्यं शूद्रैकजीविनम् ॥ ७४४ ॥
शूद्रैकयाजकं शूद्रपुष्टं शूद्रनिकेतनम् ।
शूद्रप्रतिग्रहपरं नित्ययाचकमेव च ॥ ७४५ ॥
तथा पल्लविकं [2]क्रूरमात्मसंभाविनं शपम् ।
अतिमानिनमग्राह्यं निष्क्रियं वेदनिन्दकम् ॥ ७४६ ॥
वेदविक्रयिणं नित्यं ग्रामयाजकमेव च ।
ब्रह्मविद्वेषिणं चैव ब्रह्मस्वहरणोन्मुखम् ॥ ७४७ ॥
परदारपरं दुष्टं परदारैकचिन्तकम् ।
त्यक्तभार्यं दत्तपुत्रं पुत्रविक्रयिणं तथा ॥ ७४८ ॥
मातापित्रोरुपोष्टारं गुरुद्रोहिणमेव च ।
धनसंग्रहणोद्युक्तमानसं धनिनं कटुम् ॥ ७४९ ॥

[1] पश्यतश्चक्षुषा—ङ, च, घ.    [2] क्रूरमात्मानं भाविनं—घ.

निर्दयं दानविमुखं नास्तिकं [1]परदूषकम् ।
मणिकारस्वर्णकाररजकादिपुरोहितम् ॥ ७५० ॥
अधिकाशमतृप्तं च [2]दुर्वादं दाम्भिकं जडम् ।
वेदकर्मत्यागपूर्वशास्त्रमात्रकृतश्रमम् ॥ ७५१ ॥
नास्तिकं किंभविष्यन्तमृणिनं त्यक्तवेदकम् ।
त्यक्तस्नानं त्यक्तसंध्यं निवृत्तक्षुरकर्मकम् ॥ ७५२ ॥
कृतार्धक्षुरकर्माणं तुच्छं विकसितमेहनम् ।
फल्गुं कुब्जं तथा चान्धं बधिरं [3]भ्रान्तमुल्बणम् ॥ ७५३ ॥
उन्मत्तं दुर्बलं सन्नं कोपिनं कुनखं रतम् ।
कुण्डकं गोलकं व्रात्यमशुचिं परसूतकम् ॥ ७५४ ॥
परान्निनं पराधीनं कर्षकं वार्धुषिं वृषम् ।
नृपवृत्तिं वैश्यवृत्तिं शूद्रवृत्तिं [4]दुराशयम् ॥ ७५५ ॥
अत्यन्तचपलं भ्रान्तमवीरापतिमेव च ।
तथैव गर्भिणीनाथमभोज्यान्नं दुरागसम् ॥ ७५६ ॥
अश्रोत्रियसुतं कारुधृतवस्त्रं च दुःशठम् ।
गायकं व्रणिनं [5]क्षुद्रभाषिणं [6]तुच्छभाषकम् ॥ ७५७ ॥
हास्यकारं नटं [7]नाट्यविद्यं बुरुडकृत्यकम् ।
क्षुद्रजीवं [8]कार्यजीवं नित्यवेतनजीविनम् ॥ ७५८ ॥
न भोजयेत्प्रयत्नेन निमन्त्रणदिनात्परम् ।
दिनत्रयं वर्जयित्वा [9]वृणुयादतिचर्यया ॥ ७५९ ॥

[1] पुरदूषकम्—च.
[2] दूर्वादण्डाम्बिकाजडम्—क, ख; दुर्वारं डाम्भिकं—घ.
[3] श्रान्तम्—ङ, च.
[4] दुराश्रयम्—ङ, च.
[5] क्षुद्रभाषणं—क, ख, ङ, च.
[6] तुच्छभाषिणम्—ङ, च.
[7] नाट्यवीर्यं—क, ख.
[8] कार्यजितं—क, ख.
[9] वृणुयादतिचर्यतः—घ; वृणुयादिति चर्यया—क, ख.

अनुमासिकभोक्तारं [1]पक्षमात्रं परित्यजेत् ।
[2]ऊनमासिकभोक्तारं मासमात्रं परित्यजेत् ॥ ७६० ॥
नग्नश्राद्धे वर्षमात्रं नवश्राद्धे तदर्धकम् ।
षोडशे सार्धवर्षं तु सपिण्डे च [3]द्विवत्सरम् ॥ ७६१ ॥
वर्जयित्वा द्विजं पश्चाद्धाहयेच्छ्राद्धकर्मणि ।
शूद्रामश्राद्धगं सम्यक् त्यजेद्वर्षत्रयं [4]तथा ॥ ७६२ ॥
नृपवैश्यश्राद्धभिस्साभक्षकं सन्ततं [5]तराम् ।
वर्जयेदब्दमात्रं तु ग्रामचण्डालकर्मसु[6] ॥ ७६३ ॥
आमश्राद्धगृहीतारं[7] तद्दिने नावलोकयेत् ।
दिवारात्रमसंभाष्यो दिवाकीर्त्यपुरोहितः ॥ ७६४ ॥
[8]पुण्यकाले त्वसंभाष्यः कुलालानां पुरोहितः ।
भानुवारे भौमवारे शुक्रवारे च सन्ततम् ॥ ७६५ ॥
असंभाष्यः प्रयत्नेन परसौनपुरोहितः ।
[9]पर्वणोर्योगकालेषु[10] [11]द्विजवेश्यापुरोहितः ॥ ७६६ ॥
नावेक्ष्या एव चैते वै यदि दृष्टास्तदा तदा ।
अग्नेर्मन्वेऽनुवाकस्य पठनात्कृतकृत्यता ॥ ७६७ ॥
तीर्थप्रतिग्रही दृष्टो यदि श्राद्धदिने तराम् ।
तीर्थजीवी तदावासी तत्पुरोहित एव च ॥ ७६८ ॥
यदा दृष्टस्तदा सूर्यं पश्येमेति विलोकयेत् ।

[1] मासमात्रं—क, च, घ.
[2] Line omitted by च.
[3] द्विवर्षकम्—घ.
[4] सदा—घ.
[5] पराम्—क, ख ; परान्—घ.
[6] सद्मसु for कर्मसु—ङ.
[7] अमाश्राद्धगृहीतारं—क.
[8] पुण्यकालेष्वसंभाष्यः—ङ, च.
[9] Line omitted by क.
[10] पर्वणोर्यागकालेषु—ख, ङ, घ.
[11] ध्वजी for द्विज—ख.

### वरणम्

त्रिपूर्षचर्यावृत्तान्तः स्पष्टो यस्य भवेत्तराम् ॥ ७६९ ॥
तादृशं प्रयतं दान्तमलोलुपमदाम्भिकम् ।
यदृच्छालाभसन्तुष्टं श्रोत्रियं वेदिनं शुचिम् ॥ ७७० ॥
नित्याग्निं पूर्ववयसं [1]सुधियं सत्कुलोद्भवम् ।
तस्मात्प्रत्युपकारैकरहितं सुमुखं द्विजम् ॥ ७७१ ॥
समीक्ष्य वरयेत्सम्यग्ब्राह्मणं श्राद्धकर्मणि ।
आदौ संकल्प्य प्रयतः सपवित्रकरस्तथा ॥ ७७२ ॥
दर्भपाणिः कृतप्राणायामोऽत्वरतरस्तराम् ।
अक्रोधनश्च सुमुखो वाचा संकल्पमाचरेत् ॥ ७७३ ॥
देशं कालं च संकीर्त्य तथा च प्रकृते ततः ।
पितॄन् देवान् प्राकृतान्वै समुद्दिश्य च प्राकृतम् ॥ ७७४ ॥
करिष्ये कर्म चैवेति संकल्पं प्रथमं चरेत् ।

### प्रसादाय दर्भदानम्

[2]विश्वेषामत्र देवानां स्थानमाहवनीयके ॥ ७७५ ॥
क्षणं [3]कृत्वा प्रसादोऽद्य [4]करणीय उदीर्यते ।
इत्येवं दक्षिणे हस्ते दद्याद्दर्भान् द्विजस्य वै ॥ ७७६ ॥
एतद्धि वरणं प्रोक्तं पितॄणामेवमेव वै ।

### मण्डलपूजा

कृत्वा तु वरणं पश्चादों तथेति च चोदिते ॥ ७७७ ॥

[1] सखेयं—ङ, च.

[2] विश्वेषां मन्त्रदेवानां—क, ख; विशेषमन्त्रदेवानां—घ.

[3] धृत्वा—क, ख, ङ, च. [4] करणीयमुदीर्य वै—क, ख, ङ, च.

कृत्वा तु मण्डलं शुद्धं गोमयेन[1] विधानतः ।
मण्डलं पूजयित्वादौ दैवं पैतृकमेव च ॥ ७७८ ॥
मण्डलात्पश्चिमे भागे ब्राह्मणे स्वागतीकृते ।
तत्रैव विसृजेत्पाद्यं क्षालयेन्मण्डलोपरि ॥ ७७९ ॥

गुल्फयोरधः क्षालनम्

पादप्रक्षालनं श्राद्धे वरं स्याद्गुल्फयोरधः ।
पितॄणां नरकं घोरं रोमसंसक्तवारिणा ॥ ७८० ॥
यदि स्याद्रोमसंसक्तं [2]पादप्रक्षालने भवेत् ।
तद्दोषपरिहाराय आजानु क्षालयेत्परम् ॥ ७८१ ॥

आचमनप्रकरणम्

आदावन्त्ये च पाद्ये च विष्टरे विकिरे तथा ।
उच्छिष्टपिण्डदाने च षट्सु चाचमनं स्मृतम् ॥ ७८२ ॥

कर्तुः पूर्वं भोक्तुराचमने

कर्ताऽनाचम्य यद्भोक्ता कुर्यादाचमनक्रियाम् ।
शुनो मूत्रसमं तोयं तस्मात्तत्परिवर्जयेत् ॥ ७८३ ॥

देवादिभोजनदिक्

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
प्रदद्यात्पार्वणे सर्वं देवपूजाविधानतः ॥ ७८४ ॥

वरणत्रयकालः

केचिद्रात्रौ तु पूर्वेद्युस्तद्दिने प्रातरेव च ।

[1] शुद्धगोमयेन—क, ख, घ.    [2] पापप्रक्षालने—च.

कुतपे तद्दिने भूयस्त्रिवारं श्राद्धमूचिरे ॥ ७८५ ॥
सकृदेवेति तज्जामितया श्राद्धं प्रकुर्वते ।
[1]तत्स्थाने वरणं कृत्वा श्राद्धं सर्वं प्रकुर्वते ॥ ७८६ ॥
ओं भूर्भुवः सुवरिति [2]स्वाहान्तमन्त्रो वै ततः ।

विष्टरः

अयं वो विष्टरश्चेति प्रदद्याद्विष्टरं तथा ॥ ७८७
स्वधाशब्दं पितृस्थाने सर्वत्रैवं विधीयते ।
अनेनैव तु मन्त्रेण तत्पूजा विहिता [3]परा ॥ ७८८ ॥
अयं हि परमो मन्त्रः पितॄणामर्चने महान् ।
प्रयोक्तव्यः श्राद्धदिने मन्त्राः [4]प्राकृतमातृकाः ॥ ७८९ ॥
विश्वान् देवान् [5]पितॄन्वापि संबुध्योच्चार्य तत्परम् ।
पूर्वोक्तेनैव मन्त्रेण विष्टरं प्रतिपादयेत् ॥ ७९० ॥
षष्ठ्यन्तेनासनं दद्यात्क्षणश्च क्रियतामिति ।
क्षणं दद्यात्तु दर्भेण हस्तसंस्पर्शनेन वा ॥ ७९१ ॥
प्राप्नुवन्तु भवन्तश्च तारपूर्वेण वै वदेत् ।
अर्घ्यं कृत्वा कृतः प्रोक्तः कर्तव्य इति चेत्ततः ॥ ७९२ ॥
दर्भानास्तीर्य भूपृष्ठे तत्र पात्रमधोबिलम् ।
निक्षिप्य तदुपर्येवं दर्भैराच्छिद्य वै ततः ॥ ७९३ ॥
उद्धृत्य प्रोक्ष्य तत्पात्रे [6]यवान्निक्षिप्य शम्बरम् ।
[7]भूर्भुवःसुवरापूर्वगन्धाक्षतसुमादिकम् ॥ ७९४ ॥

[1] Line omitted by क and ख.
[2] All MSS. corrupt.
[3] पुरा—क, ख.
[4] प्राकृतमातृकाः—क, ख ; पाकृतमात्रकाः—ङ.
[5] पितृंश्चापि—ङ, च.
[6] यदा निक्षिप्य—क, ख.
[7] भूर्भुवःसुवरापूर्य—ङ, घ.

तत्र निक्षिप्य तच्चाम्भस्तद्धस्तेऽर्घ्यं प्रदापयेत् ।
आवाहनं च तत्पूर्वं परं वा तत्कृताकृतम् ॥ ७९५ ॥
यदि कर्तव्यधीः स्याच्चेत्तदा व्याहृतिभिश्चरेत् ।
[1]या दिव्या इति वा नो चेद्देवा वोऽर्घ्यमिति ब्रुवन् ॥ ७९६ ॥
दद्यात्तमर्घ्यं देवेभ्यः पितृभ्यश्च क्रमेण वै ।
आवाहने विश्वेदेवा उशन्तस्त्वेति युग्मकम् ॥ ७९७ ॥
उभयत्र प्रकथितं केचनात्रापरामृचम् ।
विश्वेदेवास इत्येकां विश्वेदेवेति वै [2]पराम् ॥ ७९८ ॥
आगच्छन्त्विति तां चापि देवार्थे प्रजपन्ति वै ।
पितृस्थान उशन्तस्त्वा आयन्तु न इतीव वै ॥ ७९९ ॥
प्रजपेयुः केचनात्र [3]तदेतत् कथितं परम् ।
कृताकृतं प्रकथितमनुक्ताबाधकं न तु ॥ ८०० ॥
[4]वेदमात्रानुक्तितस्तु गन्धाक्षतयवादिकम् ।
धूपदीपदुकूलादि कृत्स्नं यज्ञोपवीतकम् ॥ ८०१ ॥
सर्वं [5]व्याहृतिभिर्दद्यात्तूष्णीं वा तद्यथारुचि ।

## अग्नौकरणम

ततोऽग्नौ करणं कुर्याद्यदि पूर्वं स्वसूत्रतः ॥ ८०२ ॥
अनुक्तमन्त्रैः काश्चित्तु कृताः स्युस्ताः क्रियास्ततः ।
तत्पूर्वकृतसंकल्पकर्ममध्याधिकत्वतः[6] ॥ ८०३ ॥

[1] या विद्या—घ.
[2] पदम्—क, ख.
[3] तदेतदधिकं परम्—ङ.
[4] देव for वेद—क, ख, च.
[5] त्वाहुतिभिः—क, ख, च.
[6] 'मध्याधिकक्रियावशात्' इति पाठान्तरम्—All MSS.

## पुनःसंकल्पप्रकरणम्

तत्किंचिद्द्विगुणीभूयात् तद्वैगुण्यत एव वै ।
पुनः संकल्पयित्वैव तत्पूर्वकक्रियां चरेत् ॥ ८०४ ॥
सर्वत्रैवं विजानीयात् तत्तत्संकल्पकर्मसु ।
न चेदेकस्य संकल्प एकधैव भवेद्धि वै ॥ ८०५ ॥
आसमाप्तेर्विधानेन प्रक्रान्ते पैतृके किल ।
अनुक्तमन्त्रपठनात् [1]पुनः संकल्पमाचरेत् ॥ ८०६ ॥
यद्युक्तमन्त्रमात्रेण यत्कर्म चलति स्थले ।
तत्कर्ममध्ये न पुनः संकल्पः प्रभवेद्धि वै ॥ ८०७ ॥
तस्मात्संकल्पयित्वाऽथ चाग्नौकरणमारभेत् ।

## परिवेषणप्रकारपौर्वापर्यम्

संपरिस्तीर्य विधिना दर्भैस्तैर्दक्षिणाग्रकैः ॥ ८०८ ॥
अन्नमादाय पक्वात्तु चोपस्तीर्य ततः पुनः ।
मेक्षणेनान्नमादाय मन्त्रमेतं श्रुतीरितम् ॥ ८०९ ॥
प्रतिकल्पैकपठितं सोमायेति हुनेद्धविः ।
[2]तच्छेषेण यमायेति अग्नयेति च तत्परम् ॥ ८१० ॥
उद्देशत्यागमात्रं च प्राचीनावीतिनैव वै ।
समुच्चार्य पुनश्चैव परिषिच्याप्रदक्षिणम् ॥ ८११ ॥
[3]अमन्त्रकं विधानेन तदन्नं शिष्टमुद्धृतम् ।
अर्धं क्षिपेद्द्विप्रपात्रे दत्वा हस्तोदकं ततः ॥ ८१२ ॥
दैवपात्रेऽभिघार्याथ पूर्ववच्च विधानतः ।

[1] पुनःसंकल्पमाप्नुयात्—क, ख, च.
[2] तच्छेषेणार्धमादाय—ङ, च.
[3] अमन्त्रकविधानेन—घ.

अन्नं च पायसं भक्ष्यं व्यञ्जनानि फलानि च ॥ ८१३ ॥
पयो मधु घृतं चान्ते सूपं तु परिवेषयेत् ।

अग्रे सूपदाने

यदि सूपादथ पुनर्वस्तु स्यात्परिवेषितम् ॥ ८१४ ॥
तद्राक्षसं भवेच्छ्राद्धं तथा तस्मान्न चाचरेत् ।

रक्षोघ्नमन्त्रम्

अन्नमाज्येनाभिघार्य गायत्र्या प्रोक्ष्य तत्परम् ॥ ८१५ ॥
[1]दर्भिनान्नं च प्रच्छाद्य चाहमस्मीति सूक्तकम् ।
प्रपठेदत्र विधिना राक्षोघ्नश्रुतिमध्यगम् ॥ ८१६ ॥

येन केनाप्युच्चारणमसमर्थस्य

स्वयं यद्यसमर्थश्चेन्मन्त्रोच्चारणकर्मणि ।
येन केन च विप्रेण वाचनीयं प्रयत्नतः ॥ ८१७ ॥
नैते मन्त्रा याजमाना अत्रोक्ताः किल कर्मणि ।
राक्षसानां विनाशाय वेदघोषः प्रशस्यते ॥ ८१८ ॥
स घोषो ब्राह्मणैः कर्तुं शक्यते प्रकृते किल ।

उष्णं दातव्यम्

अन्नं वस्तूनि यानीह पात्रेण सह केवलम् ॥ ८१९ ॥
चुल्लिस्थानि भवेयुर्हि तेभ्यः पात्रेभ्य एव वै ।
दर्विभ्यश्च समुद्धृत्य स्वल्पं स्वल्पं यथोष्मकम् ॥ ८२० ॥
[2]यदा भवेत्तदा तत्र विप्रेभ्यः परिवेषयेत् ।
ऊष्मभागा हि पितरश्चोष्मशून्यं न पैतृकम् ॥ ८२१ ॥

[1] दर्भेणान्नं च प्रच्छाद्य—ख, च, ङ, घ. [2] यथा—च.

भवेदेव न सन्देहः पश्चादन्नं यथा पुरा ।
विप्रहस्ते जलं दत्वा गायत्र्या प्रोक्ष्य वै ततः ॥ ८२२ ॥
यदैवाहवनीयं वै दक्षिणाग्निं विधानतः ।
नित्यं वै गार्हपत्यं च परिषिञ्चति मन्त्रतः ॥ ८२३ ॥
सत्यं त्वर्तेन विधिना ब्राह्मणं परिषिच्य वै[1] ।
पृथिवी तेति तत्सर्वमभिमृश्य ततः पुनः ॥ ८२४ ॥
समुपस्पर्शयित्वाथ पित्रादिभ्यो निवेदयेत् ।
प्रधानमेतद्धोमश्च समुपस्पर्शनं पुनः ॥ ८२५ ॥

मन्त्राः वाच्याः

एतन्मन्त्रत्रयं वाचा यजमानः समुच्चरेत् ।
एतन्मन्त्रत्रयं [2]श्राद्धे प्रधानकमिहोच्यते ॥ ८२६ ॥
तथा पिण्डप्रदानस्य मन्त्राः केचन चोदिताः ।
[3]एतदुच्चारणाशक्तौ व्यर्थं श्राद्धं भवेत्किल ॥ ८२७ ॥
तस्माद्यत्नेन महता होमाग्नेय इति त्रयम् ।
[4]द्वयं वाथ [5]पुनश्चैकं पृथिवी तेति किंचन ॥ ८२८ ॥
अन्नाभिमर्शने प्रोक्तममृतोपस्तराणकम्[6] ।
[7]पञ्च प्राणाहुतौ मन्त्राः प्राणायेत्यादिकाः पराः ॥ ८२९ ॥
यथावदेव [8]वाचा ते प्रवाच्या श्राद्धकर्मणि ।
न चेच्छ्राद्धं भवेन्नैतदेतैर्मन्त्रैर्भवेद्धि तत् ॥ ८३० ॥
पश्चात्पिण्डप्रदानेऽपि मन्त्रा वाच्याश्च [9]भक्तितः ।

[1] ते—च, ङ; तैः—क, ख.
[2] श्राद्धप्रधानकम्—क, ख, ङ, घ.
[3] एतदुच्चारणाशक्त्या—क, ख, च.
[4] स्वयं—क, ख, ङ.
[5] पुनश्चैतत्पृथिवी—क, ख.
[6] अमृतोपस्तरणमसि—घ.
[7] पञ्च प्राणाद्याहुतयः—ङ.
[8] वाऽऽच्चारे—क, ख.
[9] शक्तितः—ङ, च.

मन्त्रवैकल्यनाशाय वेदघोषः

भोजने समुपक्रान्ते वेदघोषं प्रयत्नतः ॥ ८३१ ॥
कारयेद्विप्रमुखतः ऋग्यजुःसामभिस्तराम् ।
तेन वैकल्यदोषा ये रक्षोभिः परिकल्पिताः ॥ ८३२ ॥
सद्यो नष्टा भवेयुर्हि[1] तस्मादेव [2]तथाचरेत् ।
यथान्यघोषो विप्राणां श्रृणुयान्नात्र केवलम् ॥ ८३३ ॥
तथा घोषः प्रकर्तव्यः स्वयं परमुखात्तथा ।
यत्नात्कारयितव्यश्च न चेद्दोषो महान् भवेत् ॥ ८३४ ॥
वेदोच्चारणसामर्थ्यविकलो यदि तत्करः ।
नमो वः पितरो [3]मन्त्रमात्रं भक्त्या जपेत्तु वै ॥ ८३५ ॥
इदं विष्णुर्व्याहृतीर्वा गायत्रीं वा विधानतः ।
विष्णोरराटमन्त्रं वा गायत्रीं वैष्णवीमपि ॥ ८३६ ॥
न चेत्तु पौरुषं सूक्तमथवा तं त्रियम्बकम् ।
आ वो राजानमन्त्रं वा मधुत्रयमथापि वा ॥ ८३७ ॥
नमो ब्रह्मण्यमन्त्रं वा दश शान्तिषु कामपि ।
[4]स्वाधीनां तामृचं नो चेद्गायत्रीं सर्वशून्यदाम् ॥ ८३८ ॥
[5]प्रतद्विष्णुमन्त्रमिरावती धेनुमतीति च ।
यजमानः स्वयं प्रीत्यै पितृभ्यो प्रवदेत्तराम् ॥ ८३९ ॥
भोजनान्ते च संपन्नं [6]प्रददेत्पुरतः स्थितः ।
[7]तृप्ताः स्थेति द्विवारं तदुक्त्वा दद्यात्तदन्नकम् ॥ ८४० ॥

[1] वा for क, ख, च.
[2] तदाचरेत्—घ.
[3] मन्त्रमान्तभक्त्या—ङ, च.
[4] सुधीनां तामृचं—घ.
[5] प्रतद्विष्णुमहामन्त्रमिरावती धेनुमिति—क, ख, च, ङ.
[6] प्रददेत्परतः स्थितः—क, ख, च, घ.
[7] The following two lines are missing in क, ख and घ,

तत्रैव विकिरेत्पात्रसमीपे तत्पुरः स्थितः ।
उच्छिष्टपिण्डं च दद्यादुत्तरापोशनं ततः ॥ ८४१ ॥
सर्वाण्येतानि शिष्टानामाचारेण [1]न चोक्तितः ।
सूत्रकारस्य वेदस्य कृतेऽभ्युदयमुच्यते ॥ ८४२ ॥
अकृते प्रत्यवायो न पुनरन्यानि केवलम् ।
तत्तत्क्रियाविशेषेषु तूष्णीकं वेदमन्त्रकैः ॥ ८४३ ॥
अत्रानुक्तैर्महाकालविलम्बो बाधकाय वै ।
भवेदेव न सन्देहः श्राद्धमन्त्रो य ईरितः ॥ ८४४ ॥
तन्मात्रस्य समीचीनप्रोक्त्यै तत्कर्म साधु वै ।
भवेत्किलान्यथा तद्धि किं भवेदिति साधुभिः ॥ ८४५ ॥
सम्यगालोचनीयोऽतो[2] श्राद्धमन्त्रोक्तिमात्रतः ।
यावान् कालविलम्बः स्यात्तावानेवात्र केवलम् ॥ ८४६ ॥
प्रामाणिको हि तद्भिन्नोऽविहितश्च विधानतः ।
कर्मणो बाधकायैव साधकाय भवेन्न तु ॥ ८४७ ॥
तस्माद्विद्वान् सूत्रवेदविहितं यावदेव वै ।
तावदेव प्रकुर्वीत सर्वसौख्याय केवलम् ॥ ८४८ ॥
आत्मनो ब्राह्मणानां च भोक्तॄणां शास्त्रवर्त्मनः ।

### शास्त्रविरोधि त्याज्यमेव

यथोवदेव कुर्वीताधिकं [3]शास्त्रविरोधि यत् ॥ ८४९ ॥
सर्वं सम्यक्परित्याज्यं विहितं यत्तदाचरेत् ।
विप्राणां भोजनात्पश्चात्तच्छास्त्राधिकक्लृप्ततः ॥ ८५० ॥

[1] न चोक्तिभिः—ङ; स चोक्तिभिः—च.
[2] अत्र for अतः—क.
[3] शास्त्रं विरोधयेत्—क, ख.

समागतात्पुनः प्रोक्तः संकल्पो नान्यथाचरेत् ।
अपां [1]मध्येन चाच्छिन्द्य दर्भान् [2]मूलैः सकृद्धतैः ॥ ८९१ ॥
शुन्धन्तां पितरः प्रोक्ष्य आयन्त्वित्यभिमन्त्र्य च ।
सकृदाच्छिन्नमन्त्रेण संस्तीर्यैव ततः पुनः ॥ ८९२ ॥
[3]मार्जयन्तेति मन्त्रेण ततो दद्यात्तिलोदकम् ।
सकृदाच्छिन्नदर्भेषु त्रिषु स्थानेषु तत्परम् ॥ ८९३ ॥
एतत्तेति च मन्त्रेण दद्यात्पिण्डत्रयं पुनः ।
यन्मे मातेति मन्त्रं तत् पितृभ्य इति वै [4]पुनः ॥ ८९४ ॥
अत्र पितरोऽमुत्र च अमी मदमतः परम् ।
ये समानास्ततो भूयो येन जातास्ततः परम् ॥ ८९५ ॥
वीरं धत्तेति तत्प्राश्याघ्राय वा तत्परं पुनः ।
मार्जयन्तेति मन्त्रेण पूर्ववच्च तिलोदकम् ॥ ८९६ ॥
दत्वाञ्जनाभ्यञ्जने च वासश्छित्वा विधानतः ।
नमो व इति मन्त्रेण नमस्कारान् समाचरेत् ॥ ८९७ ॥
गृहान्न इति मन्त्रं च ऊर्जं वहन्तीमनुं ततः ।
उत्तिष्ठत पितरो मनो न्वाहुवेति मन्त्रकम् ॥ ८९८ ॥
पुनर्न इति भूयश्च यदन्तरिक्षमिति वै ।
मन्त्रान् जप्त्वा क्रमेणैवं [5]पिण्डांस्तान्पूजयेत्ततः ॥ ८९९ ॥
पितृपिण्डार्चनं यैस्तु क्रियते दर्भपत्रकैः ।
तण्डुलैरक्षतैः पुष्पैस्तिलैरपि यवैस्तथा ॥ ८६० ॥
[6]प्रीणिताः पितरस्तेन यावच्चन्द्रार्कमेदिनी ।

[1] मेध्येन—ख, घ.
[2] पूतैः सकृद्धतैः—ङ, च ; मूलैः सकृत्फलैः—घ.
[3] The following seven lines are omitted by घ.
[4] मनुः—ङ.
[5] पिण्डांस्तान् योजयेत्ततः—क, ख.

### पुत्रकलत्रादिभिः पितृप्रदक्षिणनमस्काराः

वासोभिः पूजयेत्पिण्डान् यथाशक्त्या विचक्षणः ॥ ८६१ ॥
दक्षिणाभिश्च ताम्बूलैर्धूपदीपादिभिस्तथा ।
प्रदक्षिणनमस्कारैः पुत्रपौत्रादिभिः सह ॥ ८६२ ॥
कलत्रैः परिवारैश्च न चेत्तस्य कुलं तराम् ।
न वर्धते क्षीयते च काले काले शनैः शनैः ॥ ८६३ ॥
त एव पिण्डाः पितरस्तद्रूपेण स्थिताः परम् ।
भवेयुः पूजनार्थाय नात्र कार्या विचारणा ॥ ८६४ ॥
अप्रत्यक्षा हि पितरो वायुरूपं [1]समाश्रिताः ।
आकाशरूपमापन्नाः कालभेदेषु सन्ततम् ॥ ८६५ ॥
नित्यमाकाशरूपास्ते श्राद्धकालेषु भक्तितः ।
समाहूतास्तदा[2] सद्यो वायुरूपं समाश्रिताः ॥ ८६६ ॥
समायान्ति मनोवेगात्पिण्डकाले तु ते पुनः ।
तत्प्रविश्यैव पुत्राणां हिताय क्षणमञ्जसा ॥ ८६७ ॥
तिष्ठन्ति किल तत्पूजास्वीकाराय ततो यतन्[3] ।
[4]तत्पूजां विधिना [5]कुर्यात्ततश्चेत्पुत्रकामुकः ॥ ८६८ ॥

### मध्यमपिण्डं परिमृज्य

प्रयच्छेन्मध्यमं पिण्डं धर्मपत्न्यै समन्त्रकम् ।
आधत्त पितरश्चेति ततः सा नियता शुचिः ॥ ८६९ ॥
प्रगृह्याञ्जलिना भक्त्या [6]प्राङ्मुखी मौनमाश्रिता ।

[1] समाहिताः—क, ख.  [2] ततः for तदा—ङ.  [3] ततो यतः—ङ, च.
[4] च omits about five lines in the middle and reads: तत्पूजां विधिना कुर्यात् भुक्तेः पश्चात्सकृच्छुचिः ।
[5] कुर्वन् for कुर्यात् —ङ.  [6] प्राङ्मुखं—क, ख.

तं प्राश्य विधिनाचम्य तत्पश्चात्तु त्रिरात्रकम् ॥ ८७० ॥
कुर्वन्ती भोजनं भर्तुर्भुक्तेः पश्चात्सकृच्छुचिः ।
मुदिता हर्षितातीव दुःखिता मलिना [1]तथा ॥ ८७१ ॥
भावयन्ती महारुद्रं तं कालं निनयेदपि ।
तावन्मात्रेण च ततः सा पुत्रं पुष्करस्रजम् ॥ ८७२ ॥
लभते नात्र सन्देहो यदि सा स्याद्रजस्वला ।

### श्राद्धदिने शूद्रभोजने

न शूद्रं भोजयेच्छ्राद्धे गृहे यत्नेन तद्दिने ॥ ८७३ ॥
श्राद्धशेषं न शूद्रेभ्यो न दद्यात्तु खलेष्वपि ।

### पितृभोजनपात्रस्य खननम्

पितुरुच्छिष्टपात्राणि श्राद्धे गोप्यानि कारयेत् ॥ ८७४ ॥
खनित्वैव विनिक्षिप्य यथा श्राद्धे न गोचरम् ।

### सोदकुम्भम्

कृतेऽकृते वा सापिण्ड्ये मातापित्रोः परस्य वा ॥ ८७५ ॥
[2]तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः ।
[3]अदैवं पार्वणश्राद्धं सोदकुम्भमधर्मकम् ॥ ८७६ ॥
कुर्यादाब्दिकपर्यन्तं संकल्पविधिनान्वहम् ।
कुर्यादहरहः श्राद्धममावास्यां विना सदा ॥ ८७७ ॥
यत्सोदकलशश्राद्धं न [4]कुर्यादनुमासिके ।

### प्रथमाब्दे न तिलतर्पणम्

प्रथमाब्दे न कर्तव्यं तिलतर्पणमित्यपि ॥ ८७८ ॥

[1] सदा—ङ, च.
[2] तस्योत्पन्नं—ङ, च.
[3] अथैवं—क, ख, घ.
[4] कुर्युरनुमासिके—क, ख.

### सपिण्डीकरणात्परं श्राद्धाङ्गतर्पणम्

यदेतत्तु कथितं वत्सराब्दे सपिण्डने ।
एकादशे द्वादशे वा सपिण्डीकरणं यदि ॥ ८७९ ॥
कृतं चेत्तत्पुरं सम्यक् सद्यः श्राद्धाङ्गतर्पणम् ।
कुर्वीतैव [1]तथा दर्शे प्रतिमासं पृथक् पृथक् ॥ ८८० ॥
अकृते तर्पणे भूयः पितरस्तस्य केवलम् ।
भवेयुर्दुःखिता घोरं पुनः प्रेतत्वशङ्कया ॥ ८८१ ॥
तेषां शङ्कानिरासाय मासिकेष्वङ्गतर्पणम् ।
श्राद्धान्ते विधिना कार्यं सद्य एव न संशयः ॥ ८८२ ॥
प्रतिमासं तदा दर्शे यच्छ्राद्धं तर्पणादिकम् ।
असंशयं प्रकुर्वीत न चेद्दोषो महान् भवेत् ॥ ८८३ ॥
श्राद्धभुक्तेः परं तेषां द्विजानां करशुद्धये ।
तिलैर्हस्तोदकं कार्यं षड्वारं दर्भपुञ्जतः ॥ ८८४ ॥
[2]न चेत्तत्करशुद्धिश्च न भवेदेव केवलम् ।
मद्गोत्रं वर्धतां देव पितॄणां च प्रसादतः ॥ ८८५ ॥
इति ब्राह्मणपादेषु सपर्यां तां [3]तदाचरेत् ।
विश्वेदेवप्रसादं च पितॄणां च प्रसादकम् ॥ ८८६ ॥
स्वीकृत्य शिरसा गृह्य [4]देवाश्च पितरस्ततः ।
स्वस्ति ब्रूतेति वाचोक्त्वा ह्यक्षयोदकमित्यपि ॥ ८८७ ॥
अस्त्वित्यपि च तद्धस्ते शम्बरं सतिलाक्षतम् ।
यथाक्रमेण दद्याच्च वाचयिष्ये स्वधां तथा ॥ ८८८ ॥

[1] तदा—क, ख, घ.
[2] न चेत्तत्करशुद्धिः स्यान्न भवेदेव केवलम्—All MS.
[3] तथा चरेत्—ङ, च.
[4] वेदाश्च—ङ, च.

स्वाहामपि च संप्रार्थ्य वाच्यतामिति तैस्ततः ।
संप्रोक्तस्तु ऋचे त्वेति धारां तां प्रवदेत्पराम् ॥ ८८९ ॥
पितृभ्यश्च प्रथमतः पितामहेभ्य एव च ।
प्रपितामहेभ्यश्च तद्वत् स्वधास्ता वाच्यतामिति ॥ ८९० ॥
ब्रुवन्तु च भवन्तो वै ओं [1]स्वधामिति वै वदेत् ।
संपद्यन्तां स्वधाश्चेति देवाश्चापि तथा पुनः ॥ ८९१ ॥
प्रीयन्तां पितरः पश्चात्पितामहास्ततः किल ।
प्रपितामहाश्च पितरस्तद्धस्ते सलिलं क्षिपेत् ॥ ८९२ ॥

पितॄणां रजतं, देवानां स्वर्णम्

ततः श्राद्धैकसाद्गुण्यहेतवे दक्षिणां मुदा ।
यथाशक्त्या प्रदद्याच्च पितॄणां रजतं परम् ॥ ८९३ ॥
हिरण्यं चापि देवानां वाजेवाजेति वै वदेत्
उत्तिष्ठतेति पितरः अनुगच्छन्तु [2]देवताः ॥ ८९४ ॥
इत्युद्वास्य तु तान् पश्चादन्नशेषोऽखिलः पुनः ।
क्रियतां किमिति प्रोक्ते चेष्टैः [3]स उपभुज्यताम् ॥ ८९५ ॥
इत्युक्तस्तु ततो भूयः स्वादुषँ सद इत्यतः ।
उपस्थानं पितॄणां तु कुर्यात्प्राञ्जलिना द्विजः ॥ ८९६ ॥
तेषां तामाशिषं गृह्य प्रणिपत्य विधानतः ।
अनुव्रज्य विधानेन स्वगृहस्यान्तिमे त्यजेत् ॥ ८९७ ॥
न [4]चेत्सर्वत्र ताः प्रोक्ताः परा व्याहृतयः शिवाः ।
न चेत्तु वामदेवाय मन्त्रं परममुत्तमम् । ८९८ ॥

[1] स्वधा ता वोच्यतामिति—All Mss.
[2] विश्वेदेवाः—ङ, च.
[3] स उद्ध भुज्यताम्—क, ख ;•सहैवोपभुज्यताम्—घ.
[4] चेत्सार्वत्रिकाः प्रोक्ताः—क, ख.

प्रवदेत्तेन मनुना [1]यद्यद्वैगुण्यमागतम् ।
कर्ममध्ये पैतृकेऽस्मिन् ज्ञानाज्ञानत एव वै ॥ ८९९ ॥
कर्तृभोक्तृमहादोषद्रव्यकालादिसंभवाः ।
लोभमोहाज्ञानचित्तकायकृत्यविशेषजाः ॥ ९०० ॥
[2]महापराधाः सुक्रूराः परीहारैकवर्जिताः ।
ते सर्वे स्मरणात्तस्य महामन्त्रस्य वैभवात् ॥ ९०१ ॥
सद्यो विलयमायान्ति [3]कर्मसाद्गुण्यमभ्यति ।
प्रभवेत्सद्य एवैवं तस्मात्तु मनुमुत्तमम् ॥ ९०२ ॥
नमोद्वादशसंयुक्तं पठनीयं सकृत्किल ।
तावन्मात्रेण तत्कर्म परमं तृप्तिकारकम् ॥ ९०३ ॥
अच्छिद्रं सद्गुणं साङ्गं विकलैकविवर्जितम् ।
प्रत्यवायैकरहितं गयाश्राद्धशताधिकम् ॥ ९०४ ॥
भवत्येव न सन्देहस्तस्मात्तन्मन्त्रमुच्चरेत् ।

### उच्छिष्टादि श्राद्धे सप्त पवित्राणि

उच्छिष्टं शिवनिर्माल्यं वमनं प्रेतपर्पटम् ॥ ९०५ ॥
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ।
पयसो वत्सपीतत्वादुच्छिष्टमिति नाम तत् ॥ ९०६ ॥
भगीरथप्रार्थनया तद्गङ्गात्यवलेपहा ।
तिरोधानं जटारण्ये कृत्वा [4]तामधरद्यतः ॥ ९०७ ॥
तन्निर्माल्यं ततो गङ्गा सा प्रीत्यै परमा स्मृता ।
सा नित्यशुद्धा तद्योगाद्गङ्गा पतितपावनी ॥ ९०८ ॥

[1] यद्वत् for यद्यत्—क, ख.
[2] महापराधात् सुक्रूराः—क, ख.
[3] कर्मसाद्गुण्यमित्यपि—घ.
[4] तामद्दरयतः—क, ख.

निर्दोषा सैव कथिता तद्भिन्ना सप्त याश्च ताः ।
अशुद्धाश्च कदाचित्स्युः शिवाङ्गपतिता तु सा ॥ ९०९ ॥
अत्यन्तैकपवित्रा हि नान्या वै तत्समा सरित् ।
[1]तदीयोदकसंबन्धाद्यत्पित्र्यं कर्म तत्तु वै ॥ ९१० ॥
अपवित्रसहस्रेभ्यो मुक्तं सद्यो भविष्यति ।
पितरो नित्यतृप्तास्ते नष्टक्षुत्काः पितामहाः ॥ ९११ ॥
पारमेश्वरसायुज्यं लभन्ते प्रपितामहाः ।
अप्यन्ये कुलजा एव स्युस्ते कुलसहस्रकम् ॥ ९१२ ॥
तच्चापि वैष्णवं धाम तत्क्षणात्प्रापितं भवेत् ।
त्रिरात्रफलदा नद्यः पुण्ये तदयनद्वये ॥ ९१३ ॥
अर्धोदये महोदये चक्रिके ग्रहणे तथा ।
पद्मकापिलषष्ठ्यां वा पुनरन्येषु ताः पुनः ॥ ९१४ ॥
विधिप्रयत्नरचिताऽवगाहनजपादिकैः ।
फलप्रदा हि सरितो [2]न तथा जाह्नवी शिवा ॥ ९१५ ॥
[3]दर्शनस्पर्शनध्यानैर्जन्तूनां जन्ममोचनी ।
तदुत्तरक्षणाद्गङ्गा तद्भार्गतनुसंभवा ॥ ९१६ ॥
सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
दिनत्रयमसंस्पृश्यास्तत्रादौ याः सरिद्वराः ॥ ९१७ ॥

महानद्यः

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी दिव्या स्युर्दक्षिणे तु सरिद्वराः ॥ ९१८ ॥
पावनी नर्मदा चैव यमुना च महानदी ।

[1] तदीयोदरसंबन्धात्—क, ख, घ.  [2] सा for न—क, ख.
[3] दर्शनस्मरणध्यानैः—क, ख, ङ, च,

सरस्वती विशोका च [1]वितस्ता च तथा पुनः ॥ ९१९ ॥
दक्षिणायनकाले तु संप्राप्ते चावगाहनात् ।
परं त्रिदिनपर्यन्तं भवेयुस्ता रजस्वलाः ॥ ९२० ॥
न तु सा शम्भुसंबन्धान्नित्यशुद्धा प्रकीर्तिता ।
जाह्नवी सरितां मुख्या सर्वलोकैकपावनी ॥ ९२१ ॥
[2]ह्लादनी[3] पावनी कामा [4]कामनीया कलावती ॥
करका कलुषघ्नी या नागाश्चैतास्तुरीयकात् ॥ ९२२ ॥
दिवसात् प्रभृति प्रोक्तास्तिस्रो रात्री रजस्वलाः ।
सप्तमीप्रभृति ह्येवं सरितः काञ्चनापराः ॥ ९२३ ॥
नलिनी निर्मला नारा गुर्वी गर्भा गरा [5]धरा ।
क्षुरिका [6]काशिका श्यामा दश प्रोक्ता रजस्वलाः ॥ ९२४ ॥
दारिद्र्यनाशिनी देया बाहुदा बहुला बला ।
शर्मिष्ठा शयना स्वापा[7] नव नद्यो रजस्वलाः ॥ ९२५ ॥
दशमीप्रभृति प्रोक्तास्तिस्रो रात्रीर्मनीषिभिः ।
तप्ता तापा[8] तापसा च विश्वामित्रा बृहद्वरा ॥ ९२६ ॥
धेना सेना सना सोमा नव नद्यो रजस्वलाः ।
[9]त्रयोदशीप्रभृत्येता कथितास्ता रजस्वलाः ॥ ९२७ ॥
कलिका [10]वरुणा [11]वामा सोमदा महिला कला ।

[1] विशस्ता—च.
[2] This line is missing in घ.
[3] ह्लादिनी—ख, ङ.
[4] कर्मनीया—ङ.
[5] धुरा—च.
[6] कालिका—ख, ङ, च.
[7] स्वाहा—ङ, च.
[8] तप्तालपा—घ.
[9] त्रयोदशीप्रभृतितिथिकथितास्ता—क, ख, च, घ; त्रयोदशीप्रभृतीति कथितास्ता—ङ.
[10] करुणा—ङ; करणा—च; करुणी—घ.
[11] होमा—ङ, च.

त्वरिता [1]लुलिता तारा षोडशप्रभृति स्मृताः ॥ ९२८ ॥
तिस्रो रात्रीरापगास्ता महाशुद्धा रजस्वलाः ।
गारुत्मता गतिमती गतिदा गणवारिता ॥ ९२९ ॥
गुणाढ्या गुणदा शेषा सप्त नद्यः प्रकीर्तिताः ।
एकोनविंशतिदिनप्रभृत्येता रजस्वलाः ॥ ९३० ॥
शातद्रुश्च शतद्रुश्च वरणी वारुणी रसा ।
हिरण्यदा हैमवती गजवासी मनस्विनी ॥ ९३१ ॥
रजस्वला नवैताः स्युर्द्वाविंशतिदिनादितः ।
करतोया कालतोया वर्षतोया सरद्रसा ॥ ९३२ ॥
अन्तर्जला खेयतोया बृहत्तोया स्रवज्जला ।
पञ्चविंशत्यादितो वै विज्ञेयास्ता रजस्वलाः ॥ ९३३ ॥
अष्टाविंशत्प्रभृति वै याः काश्चन जनैः किल ।
नदीति नित्यं कथ्यन्ते खन्यन्ते च तदा [2]तदा ॥ ९३४ ॥
नदीगाः सिन्धुगा वापि पर्वतादिसमुद्भवाः ।
यत्र कुत्रापि वा जाताः क्षुद्रा दीर्घा जलैर्युताः ॥ ३३५ ॥
वर्षाजलाश्च [3]खननजला लवणशम्बराः ।
सर्वास्ताः कथिताः सद्भिर्मासान्ते स्यू रजस्वलाः ॥ ९३६ ॥
विशेषेणाधुना प्रोक्ताः सर्वासां सरितामपि ।
प्रसंगात्तत्स्वरूपस्य माहात्म्यं च [4]तथाविधम् ॥ ९३७ ॥
उक्तप्रायं विजानीयाद्या वा नित्यजलाः पुनः ।
उत्तमा इति ताः प्रोक्ता नदीनां सिन्धुसंगतः[5] ॥ ९३८ ॥
आधिक्यं तत्प्रकथितं पुण्यक्षेत्रादिना तथा[6] ।

[1] तुलिता—घ; कुलिता—ङ, च.
[2] तथा—च, ङ.
[3] खननाज्जलाः—च.
[4] तथा विधिमू—च.
[5] सिन्धुसंगमः—च.
[6] ततः—च, ङ.

क्षेत्रं चापि तथा ज्ञेयं नदीयुग्मैकमेलनात् ॥ ९३९ ॥
खननोत्पन्नसलिला तन्न्यूना कथिता तथा ।
खननाच्चाधिकजला तच्छ्रेष्ठा वै स्मृताखिलैः ॥ ९४० ॥
पञ्चयोजनपर्यन्तप्रवहत्सलिलोत्तमा ।
उत्पत्तिप्रभृतिस्थैर्यवहत्सलिलसंयुता ॥ ९४१ ॥
परमा चोत्तमा चेति सा गङ्गेति च कण्यते ।
नदीनां प्रवरा गङ्गा तज्जलं श्राद्धकर्मणि ॥ ९४२ ॥
पावनं परमं प्रोक्तं वमनं मधु चोच्यते ।
तत्प्रेतपर्पटं साक्षात्पितॄणां दुःखवारकम् ॥ ९४३ ॥
खड्गपात्रं हि [1]कुतपो दौहित्रो वा पुनः स्मृतः ।
शिवनिर्माल्यतः श्राद्धवैगुण्यं तत्प्रशाम्यति ॥ ९४४ ॥
पुनःकरणसंप्राप्तौ शिवनिर्माल्ययोगतः ।
[2]प्रनष्टः [3]प्रभवेद्दोषस्ते चात्रापि वदाम्युत ॥ ९४५ ॥

### पुनःश्राद्धप्रकरणम्

विप्रवान्तावग्निनाशे पिण्डे च विदलीकृते ।
पिण्डगोलकसंयोगे दीपनाशे तथैव च ॥ ९४६ ॥
[4]रजस्वलानाथभुक्तौ बुद्धिपूर्वं तथैव च ।
अशौचभुक्तावाशौचिसंस्पर्शे होमविस्मृतौ ॥ ९४७ ॥
अतिथौ तद्दिनभ्रान्त्या संकल्पकरणेऽपि वा ।
एकस्मिन्नेव दिवसे [5]पित्रोर्व्यत्यासतः कृतः ॥ ९४८ ॥
तद्दिने चोपवासः स्यात्पुनः श्राद्धं परेऽहनि ।

[1] दौहित्रो—क, ख, घ. [2] प्रकृष्टः—च.
[3] संभवेद्दोषस्तैः—च; स भवेद्दोषस्तैः—ङ.
[4] रजस्वलादिना भुक्तौ—ङ, च. [5] व्यत्यासवाक्यतः—ङ, च.

आद्यश्राद्धे तु भुञ्जानविप्रस्य वमनं यदि ॥ ९४९ ॥
यत्ते कृष्णेति मन्त्रेण होमं कुर्याद्यथाविधि ।
षोडशश्राद्धभुञ्जानब्राह्मणस्तु वमेद्यदि ॥ ९५० ॥
प्रेताहुतिस्तु कर्तव्या लौकिकाग्नौ यथाविधि ।

अनुमासिकाद्युच्छिष्टवमने

अनुमासिकेऽत्र कर्तव्य उच्छिष्टे वमनं यदि ॥ ९५१ ॥
कबले तु सुभुञ्जाने तृप्तिं चैव विनिर्दिशेत् ।
अमावास्यामासिके च ब्राह्मणो [1]मुखनिःस्रुतम् ॥ ९५२ ॥
तथा महालयश्राद्धे पित्रादेर्वमनं यदि ।
पितामहादिवत्कृत्वा श्राद्धशेषं समापयेत् ॥ ९५३ ॥

उच्छिष्टोच्छिष्टसंस्पर्शे

उच्छिष्टेन तु संस्पृष्टो भुञ्जानः श्राद्धकर्मणि ।
शेषमन्नं तु नाश्नीयात्कर्तुः श्राद्धस्य का गतिः ॥ ९५४ ॥
तत्स्थाननामगोत्रेण ह्यासनादि तथार्चयेत् ।
अन्नत्यागं ततः कृत्वा पावके जुहुयाच्चरुम् ॥ ९५५ ॥
पुरुषसूक्तेन जुहुयाद्यावद्द्वात्रिंशदाहुतिः ।
होमशेषं समाप्याथ श्राद्धशेषं [2]समापयेत् ॥ ९५६ ॥
अकृत्वा तु समीपे तु [3]ब्राह्मणे वमनं यदि ।
पुनः पाकं प्रकुर्वीत पिण्डदानं यथाविधि ॥ ९५७ ॥
उच्छिष्टस्पर्शनं ज्ञात्वा तत्पात्रं च विहाय च ।
तत्पात्रं परिहृत्याथ भूमिं समनुलिप्य च ॥ ९५८ ॥

[1] मुखनिस्सृतम्—ङ, घ. [2] समाचरेत्—घ.
[3] ब्राह्मणो—क, ख, ङ, च.

तस्य शीघ्रं विधायैव सर्वमन्नं प्रवेष्टयेत् ।
परिषिच्य ततः पश्चाद्भोजयेच्च न दोषकृत् ॥ ९५९ ॥

अन्योन्यस्पर्शे

श्राद्धपङ्क्तौ तु भुञ्जानावन्योन्यं स्पृशतो यदि ।
द्वौ विप्रौ विसृजेदन्नं भुक्त्वा चान्द्रायणं चरेत् ॥ ९६० ॥
उच्छिष्टोच्छिष्टसंस्पर्शे शुना शूद्रेण वा तथा ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ ९६१ ॥
[1]इन्द्राय सोमसूक्तेन श्राद्धविघ्नो यदा भवेत् ।
अग्न्यादिभिर्भोजनेन श्राद्धं संपूर्णमेव हि ॥ ९६२ ॥
इन्द्राय सोमसूक्तेन भोजनेनेति च त्रयम् ।
विधानं कथितं सम्यग्व्यवस्था ह्यत्र चोच्यते ॥ ९६३ ॥
पिण्डदानात्परं यस्य कस्यचिद्ब्राह्मणस्य वै ।
वमनाच्छ्राद्धविघ्ने तु तदा सूक्तजपाद्धि सा ॥ ९६४ ॥
श्राद्धसंपूर्णता ज्ञेया तत्पूर्वं चेत्तु दैवके ।

पितामहविष्णुवमने

पितामहे तत्परस्मिन् [2]विष्णवा वा वमने यदि ॥ ९६५ ॥
होमेनैव तदा ज्ञेया द्वयोर्यदि तदा पुनः ।
तत्सूक्तजपहोमाभ्यां श्राद्धसंपूर्णता स्मृता ॥ ९६६ ॥

दर्शादौ छर्दने

पितृस्थानस्य विप्रस्य वमने यदि दर्शके ।
पुनः पाकेन तच्छ्राद्धभोजनं विहितं [3]तदा ॥ ९६७ ॥

[1] The following two lines are missing in क and ख.
[2] विष्णौ वा—ङ, घ.
[3] तदा श्राद्धं—च, ङ.

आब्दिके वानुमासे वा तद्दिनोपोषणं भवेत् ।
परेऽहनि [1]पुनःश्राद्धं भोजनेनैव नान्यथा ॥ ९६८ ॥
एक एव यदा विप्रो भोजने छर्दितो यदि ।
आब्दिके तु परेऽह्न्येव दर्शे वा यदि मासिके ॥ ९६९ ॥
तथैवाग्निं समाधाय होमं कुर्याद्यथाविधि ।
तत्स्थाननामगोत्रेण चासनादि समर्चयेत् ॥ ९७० ॥
अन्नत्यागं प्रकुर्वीत ततोऽग्नौ जुहुयाच्चरुम् ।
प्राणादिपञ्चभिर्मन्त्रैर्यावद्द्वात्रिंशदाहुतिः ॥ ९७१ ॥
होमशेषं समाप्याथ श्राद्धशेषं समापयेत् ।
पुनः पाकेन सद्यो वै श्राद्धस्य करणं स्मृतम् ॥ ९७२ ॥
दर्शादिष्वेव कथितं [2]न [3]प्रत्यब्दे कथंचन ।
प्रत्यब्दस्य [4]परेऽह्न्येव स्थानं विप्रस्य तत्स्मृतम् ॥ ९७३ ॥

## उपवासार्थः

उपावृत्तिस्तु पाकेभ्यो यस्तु वासो गुणैः सह ॥ ९७४ ॥
उपवासः स विज्ञेयः सर्वभोगविवर्जितः ।

## अपुत्रासापिण्ड्यम्

पत्न्याः कुर्यादपुत्रायाः पत्युर्मात्रादिभिः सह ॥ ९७५ ॥
सापिण्ड्यमनुयाने तु जनकेन सहात्मजः ।

## अनुगमने

मृतं यानुगता नार्यं सा तेन सह पिण्डनम् ॥ ९७६ ॥

[1] तथा—ङ.
[2] स for न—क, ख, च.
[3] प्रत्यब्दः—All Mss.
[4] परेऽह्नीको—क, ख.

अर्हति [1]स्वर्गवासेऽपि यावदाभूतसंप्लवम् ।
स्त्रीपिण्डं भर्तृपिण्डेन [2]संयुज्य विधिवत्पुनः ॥ ९७७ ॥
[3]त्रेधा विभज्य तत्पिण्डं क्षिपेन्मात्रादिषु त्रिषु ।
भर्तुः पित्रादिभिः कुर्याद्भर्त्रा पत्न्यास्तथैव च ॥ ९७८ ॥
[4]सपत्न्या वाऽसपत्न्या वा न भेद इति गोभिलः ।

### एकादशेऽहनि षोडशम्

केचिदत्र पृथक्प्रोचुस्तं पक्षं प्रवदाम्यहम् ॥ ९७९
एकचित्यां समारूढौ दम्पती निधनं गतौ ।
एकोद्दिष्टं षोडशं च पृथगेकादशेऽहनि ॥ ९८० ॥
द्वादशेऽहनि संप्राप्ते पिण्डमेकं द्वयोः क्षिपेत् ।
पितामहादिपिण्डेषु तं पितुर्विनियोजयेत् ॥ ९८१ ॥
केचित्तमेव पिण्डं तु द्वेधा कृत्वा ततः परम् ।
उदग्भागगतं पिण्डं पितृवर्गे नियोजयेत् ॥ ९८२ ॥
यं दक्षिणस्थितं पिण्डं मातृवर्गे नियोजयेत् ।

### तद्दिने परेद्युर्वा सहगमने श्राद्धम्

अत्र केचित्पुनः प्रोचुः प्रकारान्तरतः किल ॥ ९८३ ॥
तद्दिने वा परेद्युर्वा भर्तारमनुगच्छति ।
[5]भर्त्रा सहैव शुद्धिः स्यात् श्राद्धं चैकदिने भवेत् ॥ ९८४ ॥
पैतृकं मरणं यत्र तदेवाहुः प्रधानकम् ।
केचित्तु मातृकं प्राहुरेवं पक्षद्वयं स्मृतम् ॥ ९८५ ॥

[1] स्वर्गदानेऽपि—ङ, च.
[2] सायुज्यविधिवत्पुनः—क, ख, च.
[3] त्रिधा—ङ, घ.
[4] सापत्या वानपत्या वा—घ.
[5] भर्त्रा सह विशुद्धिः स्यात्—ङ, च.

प्रचेता अत्र चोवाच स्वमतं [1]तत्प्रवक्ष्म्यहम् ।
[2]भर्त्रा सह प्रमीतायाः मृतेऽहन्यपरेऽह्नि वा ॥ ९८६ ॥
आशौचं मरणोद्दिश्यं दहनादि तयोर्न तु ।
पुनः पक्षान्तरं प्रोक्तं कैश्चित्तत्र महर्षिभिः ॥ ९८७ ॥
पतिव्रता त्वन्यदिनेऽनुगच्छेद्या स्त्री पतिचित्त्यधिरोहणेन ।
दशाहतो भर्तुरघस्य शुद्धिः श्राद्धद्वयं स्यात्पृथगेककाले ॥ ९८८ ॥

तयोराशौचे मरणादि

भर्तारमनुगच्छन्ती पत्नी चेदार्तवा यदि ।
तैलद्रोण्यां विनिक्षिप्य लवणे वा स्वकं पतिम् ॥ ९८९ ॥
परं त्रिरात्राद्दहनं कुर्युस्ते बान्धवास्तया ।
श्राद्धं चैकदिने कुर्युर्द्वयोरपि हि निर्णयः ॥ ९९० ॥
एकोद्दिष्टं षोडशं च भर्तुरेकादशेऽहनि ।
द्वादशेऽहनि संप्राप्ते पिण्डमेकं द्वयोः क्षिपेत् ॥ ९९१ ॥
पितामहादिपिण्डेषु तं पितुर्विनियोजयेत् ।
ब्रह्मवादिमतं भूयस्त्वन्यद्वक्ष्यामि [3]शोभनम् ॥ ९९२ ॥
दह्यमानं तु भर्तारं दृष्ट्वा नारी पतिव्रता ।
अनुगच्छेत्तयोः श्राद्धं पृथगेकादशेऽहनि ॥ ९९३ ॥
शिलाप्रतिष्ठापनादिकृत्यं सर्वं पृथक् पृथक् ।
एकत्रैव प्रकुर्वीत पितुर्मातुः समन्वकम् ॥ ९९४ ॥
षोडशान्तं पृथक्कृत्वा सापिण्ड्यं द्वादशेऽहनि ।
प्रेतत्वात्तु विमुक्तेन सह मातुः सपिण्डकम् ॥ ९९५ ॥

[1] तत्र वक्ष्म्यहम्—क, ख, ङ.
[2] The following five lines are omitted by क and ख.
[3] शाश्वतम्—ङ.

तत्पिण्डसंयोजनम्

स्त्रीपिण्डं भर्तृपिण्डेन संयुज्य विधिवत्पुनः ।
त्रेधा विभज्य तं पिण्डं क्षिपेन्मात्रादिषु त्रिषु ॥ ९९६ ॥

मातुः सापिण्ड्याभावस्थलम्

अत्र विष्णुर्मतं स्वस्य सुलभायावदत्किल ।
कृते पितुः सपिण्डत्वे मातुस्तु न सपिण्डनम् ॥ ९९७ ॥
पितुरेव सपिण्डत्वे तस्या अपि कृतं भवेत् ।
स्त्रीणां पृथङ् न कर्तव्या सपिण्डीकरणक्रिया ॥ ९९८ ॥

दत्तेन पालकपितुः सापिण्ड्यम्

अन्यगोत्रप्रदत्तश्चेत्तनयः स्वपितुस्ततः[1] ।
पालकस्य प्रकुर्वीत तत्पित्रादिसपिण्डनम् ॥ ९९९ ॥

दत्तपुत्रकृत्यम्

[2]विवादो नात्र कोऽप्यस्ति तादृग्दत्तसुतः पितुः ।
स्वयं तद्भिन्नगोत्रोऽपि तद्गोत्रे योजयेच्च तम् ॥ १००० ॥
पितामहादिभिः सम्यक् यत्प्राचीनैकगोत्रकैः ।
दत्तपौत्रस्य पितरं प्रपितामहमुख्यकैः ॥ १००१ ॥
त्यक्त्वा पितामहं त्वन्यगोत्रं सम्यक् ततः परम् ।
योजयेन्नात्र सन्देहस्तज्जं[3] तत्प्रपितामहम् ॥ १००२ ॥
त्यक्त्वा सम्यग्विचार्यैव स्वगोत्रैरेव योजनम् ।
कुर्यात्तद्विधिना नो चेत् पितॄणां संकरो भवेत् ॥ १००३ ॥
तेन दोषश्च सुमहान् प्रभवेदेव दुर्घटः ।

[1] तनयश्च पितुस्ततः—क, ख, ङ, घ.
[2] विहितो—ङ, घ.
[3] तज्ज्ञः—ङ, च, घ.

[1]दत्तपुत्रोद्भवो यत्नात्सपिण्डीकरणे पितुः ॥ १००४ ॥
त्यजेत्पितामहं यत्नात्तत्पुत्रः प्रपितामहम् ।
तत्पुत्रश्चेत्ततो वृद्धप्रपितामहमेव वै ॥ १००५ ॥
एवं मातुः सपिण्डे तु दत्तपुत्रोद्भवश्चरेत् ।

अन्यगोत्रदत्तः

यद्यन्यगोत्रजो दत्तः सन्ततौ तत्परंपराम् ॥ १००६ ॥
चतुष्कुलैकपर्यन्तं[2] जातानां सङ्कटं महत् ।
तस्मिन् सपिण्डीकरणे तदानीं समुपस्थिते ॥ १००७ ॥
भवत्येव हि तत्पश्चात् पञ्चमादि यथाक्रमम् ।
स्वयमेव भवेत्तावत्तद्वर्गे जन्मिनां महत् ॥ १००८ ॥
[3]अवेक्षणं जागरूकता च नित्ये स्मृते तराम् ।
तस्मात्सगोत्रे तनयं[4] संगृह्णीयादपुत्रकः ॥ १००९ ॥
शिष्टं सर्वं पूर्वमेव मया सम्यङ् निरूपितम् ।
पुत्रे जाते ततो भूयः पुत्रस्वीकरणादथ ॥ १०१० ॥
जातोऽधिकः प्रदत्तात्तु धर्मतः[5] सर्वकर्मसु ।

पितुः श्राद्धस्य षण्मासात्पूर्वं प्रभृति कृत्यम्

पित्रोः श्राद्धस्य षण्मासात्पूर्वमेव तदा तदा ॥ १०११ ॥
श्राद्धस्मृतिं प्रकुर्वन्वै कथाः काश्चन सन्ततम् ।
प्रकुर्वन् स्वजनैस्तिष्ठेदिष्टान्[6] कांश्चिद्विशेषकान् ॥ १०१२ ॥
तिलमाषव्रीहियवान् गुडमुद्गादिकान् मधु ।

[1] तत्र for दत्त—क, ख.
[2] अपि for तु—ङ, च.
[3] आपेक्षणं—क, ख.
[4] तस्मात्सगोत्रतनयं—क, ख.
[5] Ms. च (D. No. 2613) ends here.
[6] द्रष्टान् for इष्टान्—क, ख, ङ.

कन्दमूलादिकान् कांश्चिद्वस्त्रकार्पासकादिकान् ॥ १०१३ ॥
संगृह्य स्थापयेद्यत्नाद्दिव्यचन्दनखण्डकम् ।
दिव्योशीरं गुग्गुलुं च निक्षिपेच्चावनीतले ॥ १०१४ ॥
शुष्कान् शलाटुकान् कांश्चिद्गोपयेच्छ्राद्धहेतवे ।
वृक्षेषु कांश्चिद्यत्नेन भूम्यन्तर्भूतले तथा ॥ १०१५ ॥
कुसूलेषु दुकूलेषु पुनः कुम्भघटेषु च ।
स्थापयेन्निक्षिपेदेवं निखनेत्कांश्चिदप्युत ॥ १०१६ ॥
समीचीनानि वस्तूनि दृष्टमात्राणि [1]चेत्तदा ।
श्राद्धार्थमिति निश्चित्य प्रोक्त्वा स्वीयैश्च केवलम् ॥ १०१७ ॥
गोपयित्वैव यत्नेन स्थापयेत्पालयेदपि ।
तदुक्तितत्कथातृप्ताः पितरो नित्यमेव वै ॥ १०१८ ॥
आशीर्भिरेनं सततं वर्धयन्त्यपि तारिताः ।

कथातृप्तिः

भवन्ति कथया स्वर्गे पितृलोके च तेऽनिशम् ॥ १०१९ ॥
कथया तृप्तिरेतेषां [2]स्मृत्योक्त्या वचनादपि ।
तदीयकृत्यसंभाषाप्रियवस्तुप्रचारणैः ॥ १०२० ॥

विद्यमानाग्निरपि त्रिदिनात्पूर्वं पुनः

यत्नाद्दिनत्रयात्पूर्वं विद्यमानाग्निरप्यलम् ।
पुनःसंधानविधिना श्राद्धायाग्निं सुसंस्क्रियात् ॥ १०२१ ॥

श्राद्धदिने वर्ज्यम्

औपासनं विना होममन्यं होमं तु तद्दिने ।
न कुर्यादेव विधिना यदि कुर्यात्तु तत्पतेत् ॥ १०२२ ॥

[1] चेत्ततः—क, ख. [2] अनुक्त्वा—क, ख.

श्राद्धदिने दानजपादि न कर्तव्यम्

दानाध्ययनदेवार्चाजपहोममव्रतादिकान् ।
न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात् ॥ १०२३ ॥
न दद्याद्याचमानेभ्यः फलपुष्पजलाक्षतान् ।
तण्डुलान् दधितक्राज्यशाकपात्रतृणस्थलम् ॥ १०२४ ॥
काष्ठमूलकन्दभाण्डविद्यापुस्तकभूषणम् ।
ऋणमेवं धनं धान्यं चेलं वाऽनुग्रहादिकम् ॥ १०२५ ॥
कल्याणवार्ताकोपादिवाट्कुपारुष्यभाषणम् ।
बालनिग्रहतद्वाहतत्सल्लापादि वर्जयेत् ॥ १०२६ ॥
उच्चैः संभाषणं हस्तताडनं हसनं वृथा ।
दुरालापं दुष्टलोकभाषणं दुष्टशिक्षणम् ॥ १०२७ ॥
नैतानि कुर्याद्यत्नेन प्रत्यब्दे तु विशेषतः ।

मृताहे दर्शे

दर्शादिषु मृताहश्चेन्मृताहं पूर्वमाचरेत् ॥ १०२८ ॥
पश्चाद्दर्शं प्रकुर्वीत पित्रोरेवायमुच्यते ।

मृताहे मातामहादिश्राद्धसंभवे

मातामहस्य तत्पत्न्याः सापत्नीमातुरेव च ॥ १०२९ ॥
[1]पितुः श्राद्धसमत्वेन प्रोचुः किल महर्षयः ।
दर्शे समागतं मन्वादिकं श्राद्धं समाचरेत् ॥ १०३० ॥
दर्शसिद्धिस्तावता स्याद्दैवतैक्येन केवलम् ।
सपिण्डकमपिण्डं वा दैवतैक्ये पृथङ् न तु ॥ १०३१ ॥
कार्यं भवति तच्छ्राद्धं भिन्नदैवतके पुनः ।

[1] पितृश्राद्धसमत्वेन—ङ.

नित्यनैमित्तिके प्राप्ते

पूर्वं नैमित्तिकं कार्यं प्रत्यब्दे यदि तत्तदा ॥ १०३२ ॥
प्रत्यब्दमागतं प्रत्यासत्तियोगवशाच्चरेत् ।
[1]पितुः श्राद्धं प्रथमतो [2]मातुः श्राद्धं ततः परम् ॥ १०३३ ॥
पश्चान्मातामहस्यापि तत्पत्न्याश्च[3] ततः परम् ।
पश्चात्सपत्नीमातुः स्यात्पश्चात्पत्न्या प्रकीर्तितम् ॥ १०३४ ॥
सुतभ्रातृपितृव्याणां मातुलादिक्रमात्स्मृतम् ।

दर्शे बहुश्राद्धसंभवे

पित्रादिभिन्नश्राद्धानां कारुण्यानां [4]यदा पुनः ॥ १०३५ ॥
दर्शादिष्वागतानां चेन्मृताहानां तदा परम् ।
दर्शादिकं समाप्यैव कारुण्यश्राद्धमाचरेत् ॥ १०३६ ॥
केचित्पत्न्याः पितृव्यस्य तत्पत्न्याश्च समागमम् ।
दर्शादिषु [5]मृताहं वै पूर्वं कृत्वा ततः परम् ॥ १०३७ ॥
दर्शादिकमनुष्ठेयमिति [6]प्रोचुश्च तत्कृतौ ।
तस्माद्यथारुचिपरमात्मतृप्तिः[7] प्रशस्यते ॥ १०३८ ॥
वस्तुतोऽत्र पुनर्वच्मि पितृव्यो यदि केवलम् ।
[8]एतस्य परमो मुख्यस्तत्पत्नी वापि पत्न्यपि ॥ १०३९ ॥
मातृत्वकार्यकारणे[9] महती सुमहत्यपि ।
तदा चेत्तन्मृताहं तु पूर्वं कृत्वा ततः पुनः ॥ १०४० ॥

[1] पितृश्राद्धं—क, ख.
[2] मातृश्राद्धं—क, ख.
[3] तु for च—घ.
[4] यथा—क, ख, ङ.
[5] श्रुताहं—क, ख.
[6] प्रायश्च—क, ख.
[7] आत्मतुष्टिः—ङ.
[8] ङ omits the following five lines.
[9] मातृत्वकाव्यकाराणि—क, ख.

दर्शादिकं प्रकुर्वीत न चेत्ते केवला यदि ।
नाममात्रेण कथितास्तदा दर्शादिकं पुरा ॥ १०४१ ॥
कृत्वैव पश्चात्तच्छ्राद्धं कारुण्यानामिति स्थितिः ।
सर्वत्रैवं प्रकथितं स्वामिनः सख्युरेव वा ॥ १०४२ ॥
पुरोहिताचार्ययोश्च प्रत्यासत्तिप्रभेदतः ।
श्राद्धस्य करणं प्रोक्तं पुनरप्युपकारिणः ॥ १०४३ ॥
तेषां तेषां क्रियाभेदाच्छ्राद्धानुष्ठानमुच्यते ।
सर्वत्रैवात्मतुष्टिः स्याद्विदुषः परमोत्तमा ॥ १०४४ ॥

केषांचित्कल्पप्रकारः

पुनर्विशेषः कोऽप्यस्ति प्रवक्ष्याम्यत्र तं पुनः ।
यतस्तातो [1]यतो वृत्तिर्यतो जीवो यतः प्रसूः ॥ १०४५ ॥
[2]स स्वीकृतः श्राद्धतिथिर्भ्रष्टत्यक्तपितापि वा ।
दर्शादिश्राद्धपरतो मृताहश्राद्धमाचरेत् ॥ १०४६ ॥
[3]पित्रात्यन्तैककलहे धावनावसरे सुते ।
[4]जाते नष्टे च पितरि तथा मातरि तत्परम् ॥ १०४७ ॥
अल्पकालमृतायां तु तत्तद्ग्रामस्थितैरपि ।
तदा तदा पालितो यो [5]दैवाज्जीवन्प्रवर्धितः ॥ १०४८ ॥
[6]दृष्टमात्रैर्बाल्य एव विप्रबुध्यैव तैस्तराम् ।
संस्कृतश्चाध्यापितश्च ज्ञाताज्ञातैकगोत्रकः ॥ १०४९ ॥
अज्ञातग्रामतातादिर्ज्ञातजातिर्जनोक्तितः[7] ।

[1] यतोत्पत्तिः—ङ, घ.
[2] स्वस्वीकृतः—क, ख.
[3] चितात्यन्तैककलहे—क, ख, ङ.
[4] जातनष्टे—क, ख.
[5] दैवाज्जीवनवर्धितः—क, ख.
[6] दृष्टमात्रे बाल्य एव—घ.
[7] ज्ञातज्ञातिर्जनोक्तितः—क, ख.

ततो विद्वान् महात्मा यो यतस्तात इति स्मृतः ॥ १०९० ॥
एवमेव [1]तथान्योऽपि तथावस्थाप्रभेदतः ।
यतोत्पत्तिस्तु कथिता अज्ञातग्रामसंभवः ॥ १०९१ ॥
स्वजीवनप्रकारं यो बाल्ये द्वादशवार्षिकात् ।
न वेत्ति [2]नष्टजनको यतोत्पत्तिस्तु कथ्यते ॥ १०९२ ॥
मातरं यो न जानाति स्वकीयजनशून्यतः ।
तथा पित्रादिकान् [3]सर्वान् प्रोच्यतेऽसौ यतः प्रसूः ॥ १०९३ ॥
त एते किल [4]सर्वेपि विपत्कालसमुद्भवाः ।
नष्टपित्रादिकजना [5]दैवात्संप्राप्तजीवनाः ॥ १०९४ ॥
यैश्च कैश्चिद्दृष्टमात्रैर्विप्रबुध्यैकपालितैः ।
अवस्थाभेदतः सर्वे तत्तन्नामाङ्किताः स्मृताः ॥ १०९५ ॥
चत्वारः कथिताः सद्भिरेतिदुःखैकजीवितम् ।
अतिबाल्ये ततो भूयो यौवने प्राप्तसंपदः ॥ १०९६ ॥
दैवयोगेन विद्वांसः [6]कर्मठाश्चापि वा भवन् ।
पितुर्मृततिथिं यो वा ज्ञात्वा बाल्येन केवलम् ॥ १०९७ ॥
स्वयमेव श्राद्धहेतोर्मार्गशीर्षे ह्यमादिकम् ।
शास्त्रदृष्ट्या समालोच्य सद्भिरुक्तोऽथवा गृणन् ॥ १०९८ ॥
स्वस्वीकृतश्राद्धतिथिरुच्यते ब्रह्मवादिभिः ।

### भ्रष्टक्रिया

मद्यपानादिना भ्रष्टः पिता यस्य बभूव वै ॥ १०९९ ॥
मृतेस्तस्य परं प्रोष्य चतुर्विंशतिवार्षिकम् ।

[1] तथान्येऽपि—क, ख.
[2] नष्टं जनतो—क, ख.
[3] सर्वाः प्रोच्यते सा—क, ख.
[4] सर्वत्र—क, ख.
[5] वैताः संप्राप्तजीवितः—क, ख.
[6] कर्मजाश्चापि—क, ख.

भ्रष्टक्रिया प्रकर्तव्या पुत्रेण विदितात्मना ॥ १०६० ॥
तस्य श्राद्धं ततः कार्यं तादृशस्य दुरात्मनः ।
तादृक्पितृक्रियाकर्ता स उ भ्रष्टपिना स्मृतः ॥ १०६१ ॥
पितुस्तु भ्रंशमात्रेण नायं भ्रष्टपिता भवेत् ।
तादृक्कर्मैककरणसमयादथ तादृशः ॥ १०६२ ॥

सर्वथा पतितस्य पञ्चविंशद्वर्षात्परं क्रियारम्भः

भवत्यपि तथा त्यक्तपिता चापि प्रकथ्यते ।
स्वयं चण्डालतां बुध्या प्राप्तो यो स्वजनैरपि ॥ १०६३ ॥
बहिष्कृतश्च संत्यक्तस्तादृशं पितरं [1]मृनम् ।
पञ्चविंशतिवर्षेभ्यः परं पुत्रः स शास्त्रतः ॥ १०६४ ॥
षडब्दं षड्गुणत्वेन वर्षयित्वातिकृच्छ्रकैः ।
महाकृच्छ्रैस्तप्तकृच्छ्रैः पराकातिशतैरपि ॥ १०६५ ॥
चापाग्रस्नानशतकैर्मन्त्रकुम्भसहस्रकैः ।
गोसहस्रैर्विधानेन संस्कुर्यात्तस्य केवलम् ॥ १०६६ ॥
[2]प्रतिसंवत्सरं पश्चात्तादृक्च्छ्राद्धकरस्तु यः ।
स उ त्यक्तपिता ज्ञेयस्त एते तनयाः सदा ॥ १०६७ ॥
एवंजातीयका ये स्युस्ते सर्वे धर्मतत्पराः ।
दर्शादिश्राद्धपरतो मृताहश्राद्धमाचरेत्[3] ॥ १०६८ ॥
तेषां श्राद्धैककरणमेतेषां स्वस्य केवलम् ।
प्रत्यवायैकशून्याय न चेद्दोषो महान् भवेत् ॥ १०६९ ॥
[4]तत्संभूतमहादोषपरिहाराय वा न चेत् ।

[1] द्रुतम् —क, ख.
[2] ङ omits the following five lines
[3] आचरन्—क, ख.
[4] तत्संभूतिमहादोष॰—क, ख.

प्राप्तये [1]कर्मठत्वस्य न [2]चेदस्य तु केवलम् ॥ १०७० ॥
श्राद्धत्यागात् प्रत्यवायो भवेत्तस्मात्तथाऽऽचरेत् ।
नित्यं तेषां मृताहेषु [3]दानकर्मादिकं चरेत् ॥ १०७१ ॥
विप्राणां भोजनात्पूर्वं नियमोऽयमुदाहृतः ।
दुरात्मनां विशेषेण पूर्ववद्दोषशान्तये ॥ १०७२ ॥
श्राद्धभुक्तेः परं तेषां न कुर्याद्भूरिभोजनम् ।

### श्राद्धाङ्गतर्पणं परेऽहनि

परेद्युर्वा प्रयत्नेन श्राद्धाङ्गतिलतर्पणम् ॥ १०७३ ॥
सद्य एव प्रकर्तव्यं पूर्वं पश्चात्तु वा तथा ।
अभिश्रवणमेवं स्यादेकेनैव हि कारितम् ॥ १०७४ ॥
नान्नसूक्तं त्यागकाले प्राचीनावीतिकं न तु ।
अग्नौकरणहोमेऽपि[4] तच्चावश्यकमुच्यते ॥ १०७५ ॥

### उद्देशत्यागकाले सव्यम्

उद्देशत्यागकाले च सव्यमेव भवेद्धि वै ।

### मधुवाताद्यन्ते न

मधुवातादिकं [5]भुक्तेरन्ते नैव वदेदपि ॥ १०७६ ॥

### विकिरं न कुर्यात्

विकिरं नैव कुर्वीत नित्यकर्माणि यानि वा ।
तानि सर्वाणि सर्वत्र धृत्वा पुण्ड्रं विधानतः ॥ १०७७ ॥

[1] कर्मवत्त्वस्य—घ; कर्मतत्त्वस्य—ङ. [2] चेदन्यं—क, ख.
[3] दानकर्मादिकं—ङ. [4] तु for अपि—क.
[5] भुक्तेरन्ते नैव—क, ख; भुक्तस्तातेनैव—ङ.

निवेदितान्नः पञ्चयज्ञान्तेऽतिथिपूजनात् ।
पूर्वं तेषां प्रकर्तव्यं प्रत्यब्दादिककर्म वै ॥ १०७८ ॥
तेषां श्राद्धे त्यागमात्रात्कृते सर्वं कृतं भवेत् ।

वमने

अपि प्राप्तेऽपि वमने पितृस्थानस्य वा किमु ॥ १०७९ ॥
न पुनः करणं कुर्याच्छ्राद्धशेषं समापयेत् ।
पादप्रक्षालने तेषां मण्डलानर्चनं भवेत् ॥ १०८० ॥
पादप्रक्षालनार्थाय प्रदेयमुदकं परम् ।
त एते निखिला धर्मा मृताहे केवलं स्मृताः ॥ १०८१ ॥
न दर्शादिषु विज्ञेयास्तत्र धर्मा यथोक्तितः ।
प्रकर्तव्या विशेषेण विकारोऽत्यन्तकुत्सितः ॥ १०८२ ॥
मृताह एव कथितो नान्यतो यत्र कुत्रचित् ।
श्राद्धान्ते वा परेद्युर्वा शक्तो यः पितृकर्मणि ॥ १०८३ ॥
न कुर्यान्मोहतस्तूर्णीं विप्राणां भूरिभोजनम् ।
[1]अर्धतृप्ता हि पितरो भवेयुर्नात्र संशयः ॥ १०८४ ॥

कर्तुर्भोजनाभावे

श्राद्धं कृत्वा तु यो मूढो न भुङ्क्ते पितृसेवितम् ।
इष्टैः पुत्रैर्बन्धुभिश्च ब्राह्मणैर्ब्रह्मचारिभिः[2] ॥ १०८५ ॥
आचार्यैर्गुरुभिः सद्भिरागताभ्यागतैरपि
पितरो नैव तृप्ताः स्युर्भुञ्जीयात्तेन तृप्तितः ॥ १०८६ ॥
तद्वंश्यानामर्भकाणां विप्रभुक्तेरनन्तरम् ।
तत्कांक्षितानि वस्तूनि भक्ष्यादीनि फलान्यपि ॥ १०८७ ॥

[1] अथ तृप्ता—क, ख; अनतृप्ता—घ.  [2] बन्धुनादिभिः—क, ख.

स्वच्छन्दतः प्रदेयानि तावन्मात्रेण ते परम् ।
अतितुष्टा महातुष्टाः परितुष्टाः प्रहर्षिताः ॥ १०८८ ॥
पूजिताश्च भविष्यन्ति तस्माद्बालमनोरथम् ।
पूरयेत्पितृतृप्त्यर्थं तद्दिनेषु विशेषतः ॥ १०८९ ॥
तृप्ताः स्थेति तथा प्रोक्ते त्रिवारं पितृसूनुना ।
भावयन्ति [1]तदा ते वै [2]चेतसा तु वयं तथा ॥ १०९० ॥
तृप्ता जातास्तथा त्वं च तृप्तो यदि तदा वयम् ।
तृप्ता भूम न चेन्नोऽद्य का तृप्तिरिति वै तराम् ॥ १०९१ ॥
दूयमानेन मनसा तिष्ठन्ति किल तेन वै ।
सम्यग्भुञ्जीत वै[3] पूर्वं यथा कुर्वन्न भुजिक्रियाम् ॥ १०९२ ॥
अतृप्ता एव नो ते स्युरिष्टैः पुत्रैश्च बन्धुभिः ।
विप्रालंकरणे जाते गृहालंकरणं भवेत् ॥ १०९३ ॥
पत्न्यादीनामलंकारः शिष्टब्राह्मणभोजनम् ।
अन्वेव भोजनं तेषां तद्दिने क्रियते तु यत् ॥ १०९४ ॥
तत्सर्वं प्रीतये तेषां भवेदेव[4] न चान्यथा ।
यद्वा [5]तद्वा प्रकर्तव्यं तत्तत्सर्वं प्रयत्नतः ॥ १०९५ ॥
अनन्तरं विप्रमुक्तेः पित्रुद्वासनतः परम् ।
तत्पूर्वं लवमात्रं वा वस्तु किञ्चिदपि स्वयम् ॥ १०९६ ॥
न दद्याच्छ्राद्धकृद्वाचा दास्यामीति वदेन्न वा ।

तिलद्रोणत्रयः

[6]तिलद्रोणत्रयं कुर्यात्तद्दिने समुपस्थिते ॥ १०९७ ॥

[1] तथा—ङ, घ.

[2] चेतसा पावयन्त्यथा—ङ; चेतसा तु वयं यथा—घ.

[3] ते—ङ, घ. [4] भवेदेष—क, ख. [5] यद्वा—घ.

[6] ङ omits two quarter verses and four half verses in the middle and reads: तिलद्रोणत्रयं कुर्यात्तिलाः स्युः सोमदेवताः ।

[1]भक्ष्यास्तिलमयाः कार्यास्तिलकल्कं विशेषतः ।
तिलचूर्णं तैलपिष्टं तिलभर्जनमच्युत ॥ १०९८ ॥
तिलार्चनं तिलमुखं रक्षोहननमाचरेत् ।
तिलैर्विकिरणं कुर्याद्द्रव्यलोपेषु कृत्स्नशः ॥ १०९९ ॥
समीचीनं तिलैः कुर्यात्तिलाः स्युः सोमदेवताः ।
सोमः पितॄणामाधारः [2]सोमायैव तु हूयते ॥ ११०० ॥
सोऽयं हि पितृभिः प्रीतस्तद्दत्तं कव्यमुत्तमम् ।
सोमतृप्त्यैकजनकं तस्मात्सोमहुतं हविः ॥ ११०१ ॥
तत्कलावृद्धिजनकं सा कला पीयते हि तैः ।
वस्वादिभिः पितृभिस्तु [3]तदेवं तत्तिलैः सदा ॥ ११०२ ॥
सर्वश्राद्धेषु पितरः पूजनीया विशेषतः ।

### दर्शश्राद्धं तर्पणस्वरूपेण

सर्वाभावे विशेषेण तिलैर्जलविमिश्रितैः ॥ ११०३ ॥
दर्शादिकानि श्राद्धानि कार्याण्येव समन्वतः ।
स्वधा नमस्तर्पयामि पितरं च पितामहम् ॥ ११०४ ॥
प्रपितामहमेवं च वस्वादिकमयांस्तथा ।
नामगोत्रैकसंयुक्तान् श्राद्धं कृत्वापि [4]तत्परम् ॥ ११०५ ॥
तदङ्गतर्पणं कार्यं मृतस्यादौ तिलोदकम् ।
समारभ्य क्रियाः [5]कार्यास्तस्मात्सन्ततस्तिलोदकम् ॥ ११०६ ॥
प्रथमश्राद्धमेवोचुः श्राद्धप्रतिनिधित्वतः ।
तदेवोचुश्च निखिला दुर्बलानां हितेच्छवः ॥ ११०७ ॥

[1] भक्त्या तिलमयाः—क, ङ.    [2] सोमो येन—ङ.
[3] तद्देवतत्तिलैः सह—घ ; तद्देवततिलैः सदा—क, ख.
[4] तत्सवम्—क, ख.    [5] सर्वाः—क, ख.

समालोक्यैव शास्त्राणि श्रुतिमूलानि ते पुरा ।
मन्वादयो महात्मानस्तिला स्युस्तादृशाः किल ॥ ११०८ ॥
सतिलैर्क्रियते श्राद्धं विना सर्वत्र केवलम् ।
मुख्यद्रव्यैस्तिलैरद्भिः पैतृकं निखिलं भवेत् ॥ ११०९ ॥
सर्वेषां कर्मणामाद्या आप एव विशेषतः ।
परमाः कारणानीह तस्माद्ब्राह्मणपुंगवाः ॥ १११० ॥
अप एव समाश्रित्य वर्षन्ते[1] तोयदा महत् ।
जलं तत्रैव[2] वर्तन्ते तदेव परमं स्थलम्[3] ॥ ११११ ॥
प्रभूतैवोदकग्रामः सर्वदेशोत्तमोत्तमः ।
नदीतीरं विशेषेण तच्छताधिकमुच्यते ॥ १११२ ॥
तत्रैव सकला धर्मा अनुष्ठेया हि सन्ततम् ।
नदी च सजला ज्ञेया न तच्छून्या कदाचन ॥ १११३ ॥

इति पूर्वाङ्गिरसम् ।

इत्याङ्गिरसस्मृतौ पूर्वाङ्गिरसं समाप्तम् ।

---

[1] वर्तन्तेऽतो यतो महत्—क, ख ; वर्तन्ते तोयतो नृणाम्—ङ.
[2] यत्रैव—ख.
[3] Ms. ङ (D. 2612) ends here.

श्रीः

# उत्तराङ्गिरसम्

## [1]प्रथमोऽध्यायः

विश्वरूपं नमस्कृत्य देवं त्रिभुवनेश्वरम् ।
धर्मस्य दर्शनार्थाय अङ्गिरा इदमब्रवीत् ॥ १ ॥
अथ त्रयाणां वक्ष्यामि प्रमाणं [2]विधिमादितः ।
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ॥ २ ॥
[3]प्रायश्चित्तं चतुष्पादं विहितं धर्मकर्तृभिः ।
परिषद्दशधा प्रोक्ता त्रिविधा वा समासतः ॥ ३ ॥
प्रमाणाभिहितं यत्तु [4]सर्वमङ्गिरसा [5]तदा ।
अप्रमेयप्रमाणस्य [6]दुःखेनाधिगमो भवेत् ॥ ४ ॥
तस्मादङ्गिरसा पुण्यं धर्मशास्त्रमिदं कृतम् ।

[1] आङ्गिरसस्मृतिः । हरिः ॐ—ग, झ ; अङ्गिरःस्मृतिः—छ.

[2] सिद्धिमादितः—ग, छ, झ.

[3] प्रायश्चित्तचतुष्कं च विहितं धर्मकर्तृभिः—cited under अङ्गिरस् by पराशर-माधवीयम्, Vol. II. part. i. p. 232.

[4] तत्सर्वाङ्गिरसे तदा—क, ख.

[5] सुखम्—ग, छ, झ.

[6] दुःखेनाभिगमोद्भवे—ग, छ, झ.

[1]उपस्थानव्रतादेशचर्याशुद्धिप्रकाशनम् ॥ ५ ॥
[2]स धर्मस्तु कृतो ज्ञेयः स्वाधिष्ठानक एव वै ।
चतुर्भिः साधनैश्चैव धर्मः प्रोक्तः सनातनः ॥ ६ ॥
[3]कृत्वा पूर्वमुदाहार्यं यथोक्तं [4]धर्मकर्तृभिः ।
पश्चात्कार्यानुसारेण [5]शक्त्या [6]कुर्युरनुग्रहम् ॥ ७ ॥
[7]यत्पूर्वमृषिभिः प्रोक्तं धर्मशास्त्रमनुत्तमम् ।
तत्प्रमाणं तु सर्वेषां लोकधर्मानुवर्णनम् ॥ ८ ॥
[8]न हि तेषामतिक्रम्य वचनानि महात्मनाम् ।
प्रज्ञानैरपि विद्वद्भिः शक्यमन्यत्प्रभाषितुम्[9] ॥ ९ ॥
[10]स्वाभिप्रायकृतं कर्म [11]विधिविज्ञानवर्जितम् ।
[12]क्रीडाकर्मेव बालानां तत्सर्वं स्यान्निरर्थकम् ॥ १० ॥

इत्याङ्गिरसधर्मशास्त्रे उपोद्घातो नाम प्रथमोऽध्यायः

[1] Cited by प. मा. II. i. p. 232 under अङ्गिरस्; cf:

उपस्थानं व्रतादेशः स्वीयाशुद्धिप्रकाशनम् ।
प्रायश्चित्तचतुष्कं च विहितं धर्मकर्तृभिः ॥

[2] धर्मस्तु सुकृतो ज्ञेयो साधिष्ठानक एव च—ग, छ, झ.

[3] Verse cited under अङ्गिरस् by प. मा. II. i. p. 211: Reads वचः for कृत्वा; उदाहार्यं for उदाहार्यं; धर्मवक्तृभिः for धर्मकर्तृभिः ।

[4] धर्मकर्मभिः—ग.

[5] शक्ताः—ग, झ.

[6] कुर्यादनुग्रहम्—ग, छ, झ.

[7] यत्पूर्वमृषिभिर्धर्मशास्त्रं दिव्यमनुत्तमम्—क, ख, घ.

[8] Verse cited under अङ्गिरस् by प. मा. II. i. p. 211.

[9] Verse cited under अङ्गिराः by प. मा. I. i. p. 317; see विश्वरूप, याज्ञ.. स्मृ. I, 50.

[10] स्वाभिप्रायकृतं—क.

[11] यत्किंचिज्ज्ञानवर्जितम्—प. मा.

[12] क्रीडाकर्मैव—ग, घ, छ, झ.

## द्वितीयोऽध्यायः

[1]अत[2] ऊर्ध्वं प्रवक्ष्यामि चोपस्थानस्य लक्षणम् ।
उपस्थितो हि न्यायेन व्रतादेशनमर्हति ॥ १ ॥
[3]सद्यो निःसंशयः पापो न भुञ्जीतानुपस्थितः ।
भुञ्जानो [4]वर्धयेत् पापं [5]परिषद्यत्र वर्तते ॥ २ ॥
[6]संशये न तु भोक्तव्यं यावत्कार्यविनिश्चयः ।
[7]प्रमाणेनैव कर्तव्यं [8]यावदाशासनं तथा ॥ ३ ॥
कृत्वा पापं न गूहेत [9]गूह्यमानं तु वर्धते ।
स्वल्पं वाथ प्रभूतं वा धर्मविद्भ्यो निवेदयेत् ॥ ४ ॥
ते हि [10]पापकृतां वैद्या [11]बोद्धारश्चैव पाप्मनाम् ।
[12]दुःखस्यैव यथा वैद्या [13]सिद्धिमन्तो रुजायताम् ॥ ५ ॥
प्रायश्चित्ते समुत्पन्ने श्रीमान् सत्यपरायणः ।
मृदुरार्जवसंपन्नः शुद्धिं [14]यायाद्द्विजः सदा ॥ ६ ॥

[1] The following eight verses are cited under अङ्गिरस् by प. मा. II. i. p. 206—207.
[2] अथ—छ.
[3] सद्यो निःसंशये पापे—प. मा.
[4] वर्धते—क, ख.
[5] परिषद्यनिवर्तने—ग; पषद् यत्र न विद्यते and परिषद्यत्र विद्यते—प. मा.
[6] संशयेन न—क, ख.
[7] प्रमादश्च न कर्तव्यो—प. मा.; प्रमाणं चैव न कर्तव्यं—ग, छ, झ.
[8] यथैवाशंसनं—छ, झ; यथैवाशासनं—ख, ग; यथैवासंशये and यथैवासंशयः—प. मा.
[9] गूहमानं—क, ख.
[10] पापकृते—क, ख; पापकृतो and पापे कृते—प. मा.
[11] हन्तारश्चैव—प. मा.
[12] व्याधितस्य—प. मा.
[13] सिद्धिमन्तोऽथ जायताम्—क, ख; बुद्धिमन्तो रुजापहाः—प. मा; सिद्धिमन्तोऽथ जायताम्—घ.
[14] यो यो द्विजः—क, ख; याचेत मानवः—प. मा.

सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्रियो वाथ वैश्यो वा [1]ततः परिषदं व्रजेत् ॥ ७ ॥
उपस्थानं ततः शीघ्रमर्तिमान् धरणीं व्रजन् ।
गात्रैश्च शिरसा चैव न च किंचिदुदाहरेत् ॥ ८ ॥
[2]ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम् ।
विप्राः पृच्छन्ति यत्कार्यमुपवेश्यासने शुभे[3] ॥ ९ ॥
किं ते कार्यं किमर्थं वा [4]किं वा मृगयसे द्विज ।
[5]पर्षदि ब्रूहि तत्सर्वं यत्कार्यं हितमात्मनः ॥ १० ॥

[6]इत्याङ्गिरसधर्मशास्त्रे [7]परिषदुपस्थानं नाम द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

[8]सत्येन द्योतते [9]राजा सत्येन द्योतते रविः ।
सत्येन द्योतते वह्निः [10]सत्ये सर्वं प्रतिष्ठितम् ॥ १ ॥
[11]भूर्भुवःस्वस्त्रयोलोकास्तेऽपि सत्ये प्रतिष्ठिताः ।
अस्माकं चैव सर्वेषां सत्यमेव [12]परा गतिः ॥ २ ॥

[1] ततः पर्षदमाव्रजेत्—क, ख.

[2] The following two verses are cited under अङ्गिरस् by प. मा., II. i. p. 235.

[3] स्थितम्—ग, छ, झ, प. मा.

[4] सदा for किं वा—प. मा.

[5] परिषदि—All Mss.

[6] इत्याङ्गिरोधर्मशास्त्रे—क, ख.

[7] परिषदुपस्थानविधिर्नाम—छ.

[8] All these eleven verses are cited under अङ्गिरस् by प. मा. II. i. pp. 235—236.

[9] सूर्यः—क, ख, घ.

[10] सर्वं सत्ये—ग, छ, झ, प. मा.

[11] भूर्भुवःस्वस्तपोलोकास्तेऽपि—क, घ.

[12] परायणम्—ग, छ, झ; परं बलम्—प. मा.

यदि चेद्वक्ष्यते[1] सत्यं नियतं प्राप्यते[2] सुखम् ।
[3]यद्गृहीतो ह्यसत्येन न च [4]शुध्येत कर्हिचित् ॥ ३ ॥
सत्येनैव विशुध्यन्ति शुद्धिकामाश्च मानवाः ।
[5]तस्मात्प्रब्रूहि यत्सत्यमादिमध्यावसानकम् ॥ ४ ॥
एवं तैः [6]समनुज्ञातः [7]सत्यं ब्रूयादशेषतः ।
[8]तस्मिन्निवेदिते [9]कार्येऽपसार्यो यस्तु कार्यवान् ॥ ५ ॥
[10]तस्मिन्नुत्सारिते पापे यथावद्धर्मपाठकाः ।
ते तथा तत्र [11]कल्पेयुर्विमृशन्तः परस्परम् ॥ ६ ॥
[12]आपद्धर्मेषु यत्प्रोक्तं यच्च सानुग्रहं भवेत् ।
परिषत् संपदश्चैव कार्याणां च बलाबलम् ॥ ७ ॥
प्राप्य देशं च कालं च यच्च कार्यान्तरं भवेत् ।
[13]परिषच्चिन्त्य तत्सर्वं प्रायश्चित्तं विनिर्दिशेत् ॥ ८ ॥
सर्वेषां निश्चितं यत्स्याद्यच्च प्राणान्न पातयेत् ।
आहूय श्रावयेदेको [14]यः परिषन्नियोजितः ॥ ९ ॥
शृणुष्व भो इदं विप्र यत्त आदिश्यते व्रतम् ।

[1] वक्ष्यसे—प. मा. [2] पाप्स्यसे—प. मा.

[3] Leaf No. 40 of घ Ms. is injured and only half of the leaf is preserved; यद्गृहीतोऽस्यसत्येन—ग, छ, झ; यद्यागतोस्यसत्येन—प. मा.

[4] शुध्यसि—प. मा; शुध्येत्तु—ग, छ, झ.

[5] तस्मात्तद्वद—प. मा. [6] समनुक्रान्तः—ग. छ.

[7] सर्वं—प. मा. [8] तस्मिन्निवेदके—क, ख.

[9] कार्ये निष्कास्यो यस्तु—प. मा; कार्ये स वाच्यो यस्तु—क, ख.

[10] तस्मिन्निपादिते—ग; तस्मिन्नुत्पादिते—छ, झ.

[11] जल्पेयुः—प. मा. [12] आपद्धर्मेषु—प. मा.

[13] पर्षत् संचिन्त्य—प. मा. [14] पर्षदा यो नियोजितः—प. मा.

तत्तद्यत्नेन[1] कर्तव्यमन्यथा ते [2]वृथा भवेत् ॥ १० ॥
[3]यदा च ते[4] भवेच्चीर्णं[5] तदा शुद्धिप्रकाशनम् ।
कार्यं [6]सर्वप्रयत्नेन [7]न शक्त्या विप्रपूजितम् ॥ ११ ॥

इत्याङ्गिरसधर्मशास्त्रे प्रायश्चित्तविधानं नाम तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

[8]प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयोगात्प्रायश्चित्तमिति स्मृतम्[9] ॥ १ ॥
[10]प्रायश्चित्तसमं चित्तं चारयित्वा प्रदीयते ।
पर्षदा[11] क्रियते[12] [13]यत्तत्प्रायश्चित्तमिति स्मृतम् ॥ २ ॥
[14]चत्वारो वा त्रयो वापि [15]वेदवेदाग्निहोत्रिणः ।
[16]ये तु सम्यक्स्थिता विप्राः कार्याकार्यविनिश्चिताः ॥ ३ ॥
प्रायश्चित्तप्रणेतारः [17]सप्तैते परिकीर्तिताः ।

[1] तत्प्रयत्नेन—प. मा.
[2] व्रतं—छ.
[3] यथा—क, ख.
[4] मे—क, ख.
[5] यथा भवेत्तथा चीर्णे—प. मा.
[6] सर्वं प्रयत्नेन—झ, प. मा.
[7] न शक्त्यापि प्रपूजितम्—ग ; शक्त्या विप्राभिभाषितम्—प. मा.
[8] The following two verses are cited under अङ्गिरस् by प. मा., II. i. p. 3.
[9] प्रायश्चित्तं तदुच्यते—प. मा.
[10] प्रायशश्च समं चित्तं—प. मा.
[11] परिषदा—क, ख, ग, झ.
[12] कार्यते—प. मा.
[13] यत्तु—प. मा.
[14] The following three and a half verses are cited under अङ्गिरस by प. मा., II. i. p. 217.
[15] वेदवन्तोऽग्निहोत्रिणः—प. मा.
[16] ये सम्यङ्नियताः—प. मा.
[17] सप्त ते विप्रकीर्तिताः—क, ख ; सप्त तेऽपि प्रकीर्तिताः—प. मा.

एकविंशतिभिश्चान्यैः [1]पार्षदत्वं समागतैः ॥ ४ ॥
सावित्रीमात्रसारैस्तु चीर्णवेदव्रतैर्द्विजैः ।
यतीनामात्मविद्यानां[2] ध्यायिनामात्मवेदिनाम्[3] ।
शिरोव्रतैश्च स्नातानामेकोऽपि परिषद्भवेत् ॥ ५ ॥
[4]एवं पूर्वं मयाप्युक्तं तेषां ये ये परे परे ।
स्ववृत्त्या परितुष्टानां परिषत्त्वमुदाहृतम् ॥ ६ ॥
[5]एषां लघुषु कार्येषु[6] मध्यमेषु च मध्यमा ।
महापातकचिन्तासु शतशो भूय एव वा ॥ ७ ॥
[7]अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः ।
परिषत्त्वं न तेष्वस्ति सहस्रगुणितेष्वपि ॥ ८ ॥
[8]जन्मशारीरविद्याभिराचारेण श्रुतेन च ।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥ ९ ॥

[1] पर्षदत्वं—ग, झ; परिषत्त्वं—प. मा.

[2] अग्रविद्यानां—प. मा.

[3] आत्मयाजिनाम्—प. मा.

[4] Verse not found under अङ्गिरस् in प. मा.; but compare this verse with पराशरसंहिता ८, १४:

पञ्च पूर्वं मया प्रोक्तास्तेषां चासंभवे त्रयः ।
स्ववृत्तिपरितुष्टा ये परिषत् सा प्रकीर्तिता ॥

[5] Verse cited under अङ्गिरस् by प. मा. II. i. p. 217.

[6] लाघवकार्येषु—प मा.

[7] Verse not found under अङ्गिरस् in प. मा. but compare this with पराशरसंहिता, ८, १५:

अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः ।
परिषत्त्वं न तेष्वस्ति सहस्रगुणितेष्वपि ॥

[8] The following two verses are cited under अङ्गिरस् by प. मा. II. i. p. 222.

चित्रकर्म यथानेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्मन्त्रपूर्वकैः ॥ १० ॥

[1]इत्याङ्गिरसधर्मशास्त्रे परिषल्लक्षणं[2] नाम चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

[3]चातुर्वेद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणो मुख्या पर्षदेषा दशावरा ॥ १ ॥
[4]चतुर्णामपि [5]वेदानां पारगा ये द्विजोत्तमाः ।
स्वैः [6]स्वैरङ्गैर्विनाप्येते [7]चातुर्वेद्या इति स्मृताः ॥ २ ॥
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद्द्विजः ॥ ३ ॥
शब्दे छन्दसि कल्पे च शिक्षायां चैव निश्चयः ।
ज्योतिषामयने चैव [8]सनिरुक्तेऽङ्गविद्भवेत् ॥ ४ ॥
वेदविद्याव्रतस्नातः कुलशीलसमन्वितः ।
अनेकधर्मशास्त्रज्ञः पठ्यते धर्मपाठकः ॥ ५ ॥
ब्रह्मचर्याश्रमादूर्ध्वमाश्रमाद्वृद्ध उच्यते[9] ।
एषामेव तु वृद्धानां य एते संप्रकीर्तिताः ॥ ६ ॥

[1] इत्यङ्गिरोधर्मशास्त्रे—क, ख, छ. [2] परिषल्लक्षणकथनं—ग, छ, झ.

[3] Cf. प. मा., II. ii. p. 50: 'चातुर्वेद्यो विकल्पी च' इत्याद्यङ्गिरसा प्रोक्ता सर्वापि परिषदुपलभ्यते । Compare पराशरस्मृति, ८, २७ which is identical with this verse.

[4] The following four and a half verses are cited under अङ्गिरस् by प. मा. II. i. 230. [5] वर्णानां—ग, छ. झ.

[6] स्वैः स्वैरंशैर्विना—ग, झ, छ. [7] चातुर्विद्या—प. मा.

[8] स निर्मुक्तो—क, ख. [9] विप्रोऽयं वृद्ध उच्यते—प. मा.

[1]परिषद्ब्राह्मणानां च राज्ञां सा द्विगुणा [2]स्मृता ।
वैश्यानां त्रिगुणा चैव [3]पर्षद्वच्च व्रतं स्मृतम् ॥ ७ ॥
ब्राह्मणो ब्राह्मणानां तु क्षत्रियाणां [4]तु पाठकः ।
[5]वैश्यानां चैव यो प्रष्टा[6] [7]त एव व्रतदाः स्मृताः ॥ ८ ॥
अगुरुः क्षत्रियाणां तु वैश्यानां चाप्ययाजकः ।
प्रायश्चित्तं [8]समादिश्य तप्तकृच्छ्रं समाचरेत् ॥ ९ ॥
[9]एवमुद्दिश्य वर्णेषु क्षत्रियादिषु दर्शनम् ।
[10]प्रवृत्तानां तु वक्ष्यामि प्रायश्चित्तमनुत्तमम् ॥ १० ॥
शूद्रः कालेन शुध्येत गोब्राह्मणहिते रतः ।
[11]दानैर्वाप्युपवासैर्वा [12]द्विजशुश्रूषणे रतः ॥ ११ ॥
अपि वा मार्गमालम्ब्य क्षत्रधर्मेषु तिष्ठतः ।
अन्तरा ब्राह्मणं कृत्वा ततोऽस्य व्रतमादिशेत् ॥ १२ ॥
[13]तस्माच्छूद्रं समासाद्य तथा धर्मपथे [14]स्थितः ।
प्रायश्चित्तं प्रदातव्यं धर्मवेदविवर्जितम् ॥ १३ ॥

[1] The following three verses are cited under अङ्गिरस् by प. मा. II. i. p. 231.

[2] मता—प. मा.

[3] परिषत्त्वं च तत्स्मृतम्—क, ख, घ; परिषच्च व्रतं स्मृतम्—क, ख, प, मा.

[4] पुरोहितः—प. मा.

[5] वैश्यानां याजकश्चैव—प. मा.

[6] द्रष्टा—ग, छ, झ.

[7] तथैव—ग, छ, झ.

[8] समुद्दिश्य—क, ख.

[9] एवमुद्धृत्य—ग, छ, झ.

[10] वृत्तानां तु प्रवक्ष्यामि—क, झ.

[11] दण्डैर्वाप्युपलानैर्वा—क, ख.

[12] द्विजशुश्रूषणेन वा—ग, छ, झ.

[13] Verse cited under अङ्गिरस् by प. मा., II, ii. p. 178.

[14] स्थितम्—ग, छ, झ.

आपन्नो येन वा धर्मो [1]व्रतं वा येन [2]तुष्यति ।
ब्राह्मणानां प्रसादेन संतार्यः सर्व एव हि ॥ १४ ॥

[3]इत्याङ्गिरसधर्मशास्त्रे [4]प्रायश्चित्तनियन्तृकथनं नाम पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

पणे तु [5]पर्षत्कल्पस्य कल्पस्य परिषद्बलम् ।
कारिणश्चाप्युपस्थानं बलं सम्यङ्निवेदितम् ॥ १ ॥
अकल्पा परिषद्यत्र कल्पो वा परिषद्विना ।
कार्यं वाप्यन्यथोक्तं वा शुद्धिस्तत्रास्य दुर्लभा ॥ २ ॥
[6]परिषत्कल्पतो कार्या यथा सर्वे बलीयसः ।
भवन्ति न तथा पापं [7]तस्मिन् योगेऽवतीर्यते ॥ ३ ॥
एवमेतत्समासाद्य तद्योगं च प्रणश्यति ।
महत्यां चाम्भसि क्षिप्तं यथाल्पलवणं तथा ॥ ४ ॥
एतद्योगप्रधानाय कार्याणि परिशोधने ।
तद्द्रव्यं कर्णसंयोगाद्वस्त्राणामिव[8] शोधने ॥ ५ ॥
यत्पापं शाम्यमानस्य [9]कर्तुर्धर्मेण [10]शाश्वतः ।
तद्वद्गच्छति [11]कात्स्न्येंन भागशः प्रब्रवीमि ते ॥ ६ ॥
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।

[1] वृत्तं—ग, छ, झ.
[2] पुष्यति—ग, छ, झ.
[3] इत्यङ्गिरोधर्मशास्त्रे—क, ख.
[4] प्रायश्चित्तनिर्णेतारकथनं—ग, छ, झ.
[5] पर्षत्काल्यस्य—क, ख.
[6] पर्षत्कल्यतया—ग, छ, झ.
[7] तदन्योगवतीर्यते—क, ख.
[8] वस्त्राणामिव—झ.
[9] कर्मधर्मेण—ग, छ, झ.
[10] या स्मृता—छ.
[11] वै तेन—क, ख.

[1]अन्तःप्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ७ ॥
गुरू राजा यमो वापि [2]शास्ता धर्मेण युज्यते ।
शास्ता संमुच्यते पापाद्दाहतो[3] भयतः शुभम् ॥ ८ ॥
[4]प्रायश्चित्ते यदा चीर्णे [5]ब्राह्मणे दग्धकिल्बिषे ।
धर्मं पृच्छामि तत्त्वेन [6]तत्पापं क्व नु तिष्ठति ॥ ९ ॥
नैव गच्छति कर्तारं नैव गच्छति पार्षदम् ।
मारुतार्कांशुसंयोगाज्जलवत्संप्रशीर्यते[7] ॥ १० ॥
तेषां त्रेताग्निना दग्धं पावकस्य तु धीमतः ।
नश्यते नात्र संदेहः सूर्यदृष्टिर्हिमं यथा ॥ ११ ॥
प्रब्रूयात्पक्षतो यच्च बाह्यं यच्चापि पर्षदः ।
[8]गच्छतस्तावुभौ मूढौ नरकं तेन कर्मणा ॥ १२ ॥
[9]अजानन् यस्तु विब्रूयाज्जानन्वाप्यन्यथा वदेत् ।
उभयोर्हि तयोर्दोषः पक्षयोरुभयोरपि[10] ॥ १३ ॥
[11]अजानानां च दातॄणामदातॄणां च जानताम् ।
एवं भवेन्महादोषस्तस्माज्ज्ञात्वा वदेत्सदा ॥ १४ ॥
यत्तु दत्तमजानद्भिः प्रायश्चित्तं समागतैः ।

[1] गुह्यप्रच्छन्नपापानां—छ, झ. [2] शास्त्रधर्मेण—छ, झ.

[3] दहन्यतोभयतः—छ.

[4] The following three verses are cited under अङ्गिरस् by प. मा. II. i. p. 214—215.

[5] ब्राह्मणो दग्धकिल्बिषः—क, ख. [6] यत्पापं—क, ख.

[7] संप्रलीयते—ग, छ, झ. [8] व्रजतः—ग.

[9] Verse cited under अङ्गिरस् by प. मा., II. i. p. 235.

[10] इह for अपि—क, ख.

[11] क and ख omit about two verses in the middle and read: अजानानां च दातॄणां धर्मवेदाङ्गपारगाः ।

तत्पापं शतधा भूत्वा दातॄनेवोपतिष्ठति ॥ १९ ॥
ये तु सम्यकूस्थिना विप्रा धर्मवेदाङ्गपारगाः ।
शक्तास्ते तारणे तेषामात्मनोऽनुग्रहस्य च ॥ १६ ॥

[1]इत्याङ्गिरसधर्मशास्त्रे [2]प्रायश्चित्ताचारकथनं नाम षष्ठोऽध्यायः

## सप्तमोऽध्यायः

[3]आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।
जानन्तो न प्रयच्छन्ति [4]ते च यान्ति समं तु तैः ॥ १ ॥
तस्मादार्तं समासाद्य [5]ब्राह्मणं तु विशेषतः ।
जानद्भिः [6]पर्षदः पन्था न हातव्यः पराङ्मुखैः ॥ २ ॥

प्रायश्चित्तं वक्तव्यम्

तस्य कार्यो व्रतादेशः [7]प्रमाणार्थं हि दातृभिः ।
[8]अज्ञानादुपदेष्टव्यः क्रमशः सर्व एव वा ॥ ३ ॥
भयादभ्युत्तरेत्कश्चिद्व्यार्तं ब्राह्मणं क्वचित् ।
एवं पापात्समुद्धृत्य [9]तेन तुल्यफलो भवेत् ॥ ४ ॥
[10]अनर्थितैरनाहूतैरपृष्टैश्च यथाविधि ।

[1] इत्यङ्गिरोधर्मशास्त्रे—क, ख. [2] प्रायश्चित्ताचरणकथनं—ग, छ, झ.

[3] The following four verses are cited under अङ्गिरस् by प. मा. II. i. p. 234.

[4] ते तेषां समभागिनः—प. मा. [5] ब्राह्मणांस्तु—प. मा.

[6] पार्षदा पन्था न हन्तव्या—क, ख. [7] पावनार्थे हितेप्सुभिः—प. मा.

[8] अज्ञानादुपदेष्टव्यं क्रमशः सर्वमेव वा—प. मा.

[9] तेन तुल्यं फलं लभेत्—प. मा.

[10] Verse cited under अङ्गिरस् by प. मा. II. i. p. 234.

प्रायश्चित्तं न दातव्यं जानद्भिरपि च द्विजैः ॥ ५ ॥
तस्माज्जनैः प्रदातव्यमनुज्ञाप्य च पर्षदम् ।
न चान्येषु प्रजल्पत्सु चैवं धर्मो न हीयते ॥ ६ ॥
[1]पातकेषु शतं पर्षत् सहस्रं महदादिषु ।
उपपापेषु पञ्चाशत् स्वल्पं स्वल्पेषु निश्चयः ॥ ७ ॥

पञ्चमहापातकिनः

ब्रह्महा स्वर्णहारी च सुरापो गुरुतल्पगः ।
एतैः संयुज्यते योऽन्यः पतितैः सह पञ्चमः ॥ ८ ॥

पतिताः

नारीपुरुषहन्ता च कन्यादूषी गवां च हा ।
चत्वारः पतिता प्रोक्ता यथा वै ब्रह्महादयः ॥
[2]उपपातकास्त्वसंख्यातास्ते च गोघ्नादयस्तथा ॥ ९ ॥

[3]इत्याङ्गिरसधर्मशास्त्रे पापपरिगणनं नाम सप्तमोऽध्यायः

## अष्टमोऽध्यायः

### प्रतिग्रहे

[4]आहिताग्निस्तु यो विप्रः [5]प्रतिगृह्णाति शूद्रतः ।

[1] Verse cited under अङ्गिरस् by स्मृतिमुक्ताफलम्, प्रायश्चित्तकाण्डम्, p. 870 and under स्मृत्यन्तरे by मिताक्षरा, याज्ञ. स्मृ. ३, ३००.

[2] उपपातकास्तु ते प्रोक्तास्ते च—क, ख, घ.

[3] इत्यङ्गिरोधर्मशास्त्रे—क, ख.

[4] The following nine verses are cited under अङ्गिरस् by प. मा. II. i. p. 375-376.

[5] शूद्रान्न प्रतिगृह्य तु—प. मा.

भोक्तॄणां समतां[1] याति तिर्यग्योनिं च गच्छति ॥ १ ॥

शूद्रान्नभोजने

यस्तु वेदमधीयानो [2]भुङ्क्ते शूद्रान्नमेव च ।
शूद्रे वेदफलं याति शूद्रत्वं [3]च स गच्छति ॥ २ ॥

शूद्रं प्रशस्य स्वस्तिवचने

घ्रात्वा [4]पीत्वा निरीक्ष्याथ स्पृष्ट्वा च प्रतिगृह्य च ।
प्रशस्य स्वस्ति चेत्युक्त्वा भोक्ता एव न संशयः ॥ ३ ॥
एते दोषा भवन्तीह [5]शूद्रान्नस्य परिग्रहे ।
अनुग्रहं तु वक्ष्यामि मनुना चोदितं पुरा ॥ ४ ॥
आमं वा यदि वा पक्वं [6]शूद्रान्नमुपसेवते ।
किल्बिषं भुञ्जते भोक्ता यश्च विप्रः पुरोहितः ॥ ५ ॥

प्रतिगृह्यान्येभ्यो दातव्यम्

गुरुवह्न्यतिथीनां तु[7] भृत्यानां तु विशेषतः ।
प्रतिगृह्य प्रदातव्यं [8]न भुञ्जीत स्वयं ततः ॥ ६ ॥

शूद्रान्नरसपुष्टाधीयानस्य

[9]शूद्रान्नरसपुष्टस्य चाधीयानस्य नित्यशः ।

[1] भोगांस्तामसतां—प. मा. [2] शूद्रान्नमुपभुञ्जति—प. मा.
[3] चाधिगच्छति—ग, छ, झ ; चापि गच्छति—प. मा.
[4] चैवोष्मणा चैव स्पृष्ट्वा—प. मा. [5] शूद्रान्नस्वपरिग्रहे—क, ख.
[6] शूद्रान्नमुपसाधयेत्—प. मा.
[7] गुर्वभिह्यतिथीनां तु—क, ग, छ, झ ; गुर्वर्थे ह्यतिथीनां तु—प. मा.
[8] न तु तृप्येत्—प. मा.
[9] Cited by अङ्गिरःस्मृति, verse No. ६८. (A.S.S.)

जपतो जुह्वतो वापि गतिरूर्ध्वं न विद्यते ॥ ७ ॥

षण्मासं भुक्तौ

षण्मासानथ यो भुङ्क्ते शूद्रस्यान्नं निरन्तरम् ।
जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ ८ ॥
अकृत्वैव निवृत्तिं यः [1]शूद्रान्नान्म्रियते द्विजः ।
आहिताग्निर्विशेषेण स शूद्रगतिभाग्भवेत्[2] ॥ ९ ॥
पक्वान्नवर्जं विप्रेभ्यो गोधान्यं क्षत्रियादपि ।
[3]वैश्यात्तु सर्वधान्यानि [4]शूद्राद्धान्यं न किंचन ॥ १० ॥
अनूदकं तु तत्सर्वं गन्धमाल्यविवर्जितम् ।
यथा वर्णेषु [5]यद्दत्तं [6]प्रतिगृह्णीत वै द्विजः ॥ ११ ॥
यत्तु क्षेत्रगतं धान्यं खले वा कण एव वा ।
सार्वकालं गृहीतव्यं शूद्रादप्यङ्गिरोऽब्रवीत् ॥ १२ ॥
सत्पात्रे समनुज्ञातं दुग्धं यच्छुचिना भवेत् ।
यथा चौषधिकृत्यं स्याद्दध्ना वा पयसापि वा ॥ १३ ॥
पात्रेभ्योऽपि तथा ग्राह्यं शूद्रेभ्यः प्राकृतादपि ।
शूद्रवेश्मनि विप्राणां क्षीरं वा यदि वा दधि ॥ १४ ॥
निवृत्तेन न पातव्यं शूद्रान्नसदृशं हि तत् ।

[1] शूद्रान्नं नियतो द्विजः—क, ख.

[2] छ and झ add one verse after this :

आमन्त्र्य यतिसंस्कारैरन्नं तेभ्यः प्रदीप्सितम् ।
तस्मादामं गृहीतव्यमन्नं श्रुतस्मृतान्तरात् ॥

[3] झ omits the following eight lines.

[4] शूद्राद्धार्यं—ग ; शूद्राद्धयायाम—छ.

[5] यद्दृष्टं—ग, छ. [6] प्रतिगृह्णाति—क, ख.

अग्न्यगारे गवां गोष्ठे नदीविप्रगृहेषु च ॥ १५ ॥
कूपस्थाने तथारण्ये पेयं चैव पयो दधि ।
[1]आमं मांसं दधि घृतं धान्यं क्षीरमथौषधम्[2] ॥ १६ ॥
गुडो रसस्तथोदश्विद्भोज्यान्येतानि नित्यशः ।
अशृतं चारनालं च [3]ताम्बूलं सक्तवस्तिलाः ॥ १७ ॥
फलानि पिण्याकमथो ग्राह्यमौषधमेव च ।
अप्रणोद्यानि मेध्यानि [4]प्रतिग्राह्याणि नित्यशः ॥ १८ ॥
[5]सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः ।
पिबेत्पानीयमज्ञानाद्भुङ्क्ते [6]वा संस्पृशेत वा ॥ १९ ॥
पानीयपाने कुर्वीत पञ्चगव्यस्य प्राशनम् ।
त्रिरात्रोपोषणं भुङ्क्ते [7]स्पर्शे स्नानं विधीयते ॥ २० ॥

[8]इत्याङ्गिरसधर्मशास्त्रे शूद्रान्नादिनिषेधकथनं नामाष्टमोऽध्यायः

## [9]नवमोऽध्यायः

[10]अन्तर्दशाहे भुक्त्वान्नं सूतके मृतकेऽपि वा ।

[1] The following four lines are cited under अङ्गिरस् by प. मा. II, i. p. 416.

[2] मांसं दधि घृतं धान्यं क्षीरमाज्यमथौषधम्—प. मा.

[3] कान्दुकाः—प. मा.

[4] प्रतिगृह्णाति—छ.

[5] See अङ्गिरःस्मृतिः, verse No. ८१–८२ (A.S.S.)

[6] चान्नं स्पृशेत वा—अ. स्मृ.

[7] त्रिरात्रोपोषितो भूत्वा स्पृष्ट्वा स्नानेन शुध्यति—अ. स्मृ.

[8] इत्यङ्गिरोधर्मशास्त्रे अभक्ष्यभक्षणप्रायश्चित्तं नामाष्टमोऽध्यायः—क, ख, घ.

[9] This *adhyaya* is not found in क, ख and घ MSS.

[10] Line cited under अङ्गिरस् by प. मा., II. i. p. 422.

दशरात्रं पिबेद्भक्ष्यं ब्राह्मणो ब्राह्मणस्य तु ॥ १ ॥
क्षत्रियस्यार्धमासं तु विशः पञ्चाधिकं तथा ।
शूद्रस्यैव तु भुक्त्वान्नं त्रिभिर्मासैर्व्यपोहति ॥ २ ॥
आहिताग्निस्त्रिरात्रेण[1] ब्रह्मक्षत्रविशामपि ।
पञ्चरात्रं चरेद्भुक्त्वा श्रोत्रियस्याग्निहोत्रिणः ॥ ३ ॥
अत ऊर्ध्वं तु स्नातानां मासाशौचं न विद्यते ।
दीक्षितानां च सर्वेषां राज्ञां सर्वनिधेस्तथा ॥ ४ ॥
ससत्रे दानधर्मे च पक्वमन्नं तु गर्हितम् ।
पञ्चरात्रं चरेद्भक्ष्यं षडहं मध्यमाचरेत् ॥ ५ ॥
तथा चान्येष्वमोन्येषु त्र्यहमेवं समाचरेत् ।
[2]अनापत्सु चरेद्भैक्ष्यं सिद्धं वस्तु गृहे वसन् ॥ ६ ॥
दशरात्रं चरेद्भक्ष्यमापत्सु च त्र्यहं चरेत् ।
[3]पतितानां च सर्वेषां भुक्त्वा चान्द्रायणं चरेत् ॥ ७ ॥
प्रतिमासदिनं दृष्टमन्यथा पतितो भवेत् ।
प्रतिसंवत्सरं वापि श्रोत्रियस्य भवेदिदम् ॥ ८ ॥
ब्रह्मचारी यतिश्चापि विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ ९ ॥
व्याधितस्य दरिद्रस्य कुटुम्बात्प्रच्युतस्य च ।
अध्वानं वा प्रयातस्य भैक्ष्यचर्या विधीयते ॥ १० ॥
[4]ब्रह्मचारी शुना दष्टस्त्र्यहमेवं समाचरेत्[5] ।

[1] आहिताग्नेस्त्रिरात्रेण—ग.
[2] Verse omitted by ग.
[3] Line omitted by छ.
[4] The following two verses are cited under अङ्गिरस् by प. मा. II. i. p. 67.
[5] त्र्यहं सायं पयः पिबेत्—प. मा.

गृहस्थस्तु द्विरात्रं वाप्येकाहं वाग्निहोत्रवान् ॥ ११ ॥
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
तदेव द्विगुणं वक्त्रे मूर्ध्नि चैव चतुर्गुणम् ॥ १२ ॥
अत ऊर्ध्वं तु यत्स्नातः स्नानेनैव विशुध्यति ।
सर्वेष्वेवावकाशेषु तदा प्रव्रजितः स्वयम् ॥ १३ ॥
[1]अव्रती सव्रती वापि शुना दष्टस्तथा द्विजः ।
दृष्ट्वाग्निं हूयमानं तु सद्य एव शुचिर्भवेत् ॥ १४ ॥
[2]ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत् ॥ १५ ॥
यां दिशं तु गतः सोमस्तां दिशं तु विलोकयेत् ।
सोममार्गेण सा पूता पञ्चगव्येन शुध्यति ॥ १६ ॥

इत्याङ्गिरसधर्मशास्त्रे अभक्ष्यभक्षणप्रायश्चित्तविधिर्नाम नवमोऽध्यायः

## दशमोऽध्यायः

[3]दण्डादूर्ध्वं तु यत्नेन प्रहरेत्तु निपातयेत् ।
द्विगुणं गोव्रतं तस्य प्रायश्चित्तं विधीयते ॥ १ ॥

### दण्डलक्षणम्

[4]अङ्गुष्ठमात्रं स्थूलः स्याद्बाहुमात्रप्रमाणतः ।

[1] Verse cited under अङ्गिरस् by प. मा. II. i. p. 68.

[2] The following two verses are cited under अङ्गिरस् by प. मा. II. i. p. 65.

[3] Cf. पराशरसंहिता, ९, २ :
दण्डादूर्ध्वं यदन्येन प्रहाराद्यदि पातयेत् ।
प्रायश्चित्तं तदा प्रोक्तं द्विगुणं गोवधे चरेत् ॥

[4] Cf. पराशरसंहिता, ९, १०.

सार्द्रश्च सपलाशश्च दण्ड इत्यभिधीयते ॥ २ ॥

गवां रोधनादिना मरणे

रोधने बन्धने वापि योजने वा गवां रुजा ।
उत्पन्ने मरणे वापि निमित्तं तत्र विद्यते ॥ ३ ॥
[1]पादमेकं चरेद्रोधे[2] द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत्सर्वं निपातने ॥ ४ ॥
[3]न नारिकेलेन न फालकेन[4]
न मौञ्जिना नापि च वल्कलेन ।
एतैश्च गावो न हि बन्धनीया
बध्वा तु तिष्ठेत्परशुं प्रगृह्य ॥ ५ ॥
[5]कुशकाशैस्तु बध्नीयादूर्ध्वं दक्षिणतोमुखम् ।
पाशलग्ने तथा दाहे[6] प्रायश्चित्तं न विद्यते ॥ ६ ॥

[1] Verse cited under अङ्गिरस् by प. मा., II. i. p. 257; also compare पराशरसंहिता, ९, ३–४.

[2] पादं चरेद्रोधवधे—प. मा.

[3] Verse cited under अङ्गिरस् by प. मा. II. i. p. 275; also compare पराशरसंहिता ९, ३३ :

न नारिकेलैर्न च शाणवालैर्न वापि मौञ्जैर्न च वल्कशृङ्खलैः ।
एतैस्तु गावो न विबन्धनीया बध्वापि तिष्ठेत्परशुं प्रगृह्य ॥

[4] बालकेन—क, ख; वालुकेन—ग, छ, झ, घ.

[5] Cf. पराशरसंहिता, ९, ३४–३५ :

कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम् ।
पाशलग्नाग्निदग्धासु प्रायश्चित्तं न विद्यते ॥
यदि तत्र भवेत्काष्ठं प्रायश्चित्तं कथं भवेत् ।
जपित्वा पावनीं देवीं मुच्यते तत्र किल्बिषात् ॥

[6] पाशलग्नेऽथ दाहेषु—ग, छ, झ.

यदि तत्र भवेच्छोकः प्रायश्चित्तं कथं भवेत् ।
जपित्वा पावमानीयं मुच्यते सर्वकिल्बिषात् ॥ ७ ॥
[1]अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा ।
पातनं [2]चैव शृङ्गस्य मासार्धं यावकं पिबेत् ॥ ८ ॥
[3]व्रणभङ्गे च कर्तव्यः स्नेहाभ्यङ्गश्च पाणिना ।
यवसश्चोपहर्तव्यो[4] यावद्दृढव्रणो भवेत् ॥ ९ ॥
[5]अस्थिभङ्गे तथा शृङ्गकटिभङ्गे तथैव च ।
यावज्जीवति षण्मासान् प्रायश्चित्तं न विद्यते ॥ १० ॥
[6]शृङ्गभङ्गेऽस्थिभङ्गे च[7] चर्मनिर्मोचने तथा[8] ।
दशरात्रं पिबेद्वज्रं [9]यावत्स्वस्ति भवेत्तदा ॥ ११ ॥
[10]अन्यत्राङ्कनलक्ष्मभ्यां वाहनिर्मोचने तथा ।
सायं संगोपनार्थं तु न दुष्येद्रोधबन्धयोः ॥ १२ ॥

[1] Verse cited under अङ्गिरस् by प. मा. II. i. p. 267.

[2] चैकशृङ्गस्य—प. मा.

[3] Cf. पराशरसंहिता—९, २०.

[4] यवसश्च प्रदातव्यो—क, ख.

[5] Cf. पराशरसंहिता—९, १९; प. सं. reads शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च for the first line and यदि जीवति for यावज्जीवति in the second line.

[6] Verse cited under अङ्गिरस् by प. मा. II. i. p. 267.

[7] तथैवात्र—क, ख.

[8] क and ख MSS. read the line 'सायं सगोपनार्थं तु न दुष्येद्रोधबन्धयो:' after this which is to be read after the next two lines as seen in the text.

[9] यदा स्वस्ति भवेत्तदा—क, ख; स्वस्थापि यदि गौर्भवेत्—प. मा.

[10] The following three verses are omitted by क, ख and घ. Compare this verse with पराशरसंहिता, ९, २७. परा. सं. reads वाहने मोचने तथा for वाहनिर्मोचने तथा ।

[1]यन्त्रेण गोचिकित्सार्थं मूढगर्भविमोचने ।
यत्ने कृते विपद्येत न दोषस्तत्र विद्यते ॥ १३ ॥
[2]औषधं स्नेहमाहारं दद्याद्गोब्राह्मणे हितम् ।
प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तं न विद्यते[3] ॥ १४ ॥
गजे वाजिनि वा व्याघ्रे खड्गे श्याममृगे वृके ।
सिंहे शुनि वराहे च मयूरे पक्षिणामपि ॥ १५ ॥
काके हंसे च गृध्रे च टिट्टिभे खञ्जरीटके ।
यथा गवि तथा विन्द्याद्भगवान्मनुरब्रवीत्[4] ॥ १६ ॥
मोहाद्विरूढमाचार्यप्रत्यावृत्तौ तु यो द्विजः ।
प्रायश्चित्तं न [5]मृग्येत शृणु तस्यापि यो विधिः ॥ १७ ॥
[6]विहितं यदकामानां कामात्तद्द्विगुणं भवेत् ।
पश्चात्तु दद्यात्तापेन[7] कृत्वा पापानि मानवः ॥ १८ ॥
धनत्यागं गृहे कृत्वा सर्वत्यागेन शुध्यति ।
द्रव्यैर्वा विपुलैर्विप्रान् तोषयेद्यः[8] सुनिश्चितम् ॥ १९ ॥

### बालवृद्धाङ्गनानां प्रायश्चित्तम्

तन्नार्यः[9] कामतः प्राप्ताः [10]पापमर्धं समादिशेत् ।
अर्वाक्तु द्वादशादब्दात् पुरुषो ह्यर्धभाग्भवेत् ॥ २० ॥

[1] Cf. परा. सं., ९, ४५; प. सं. reads यन्त्रिता for यन्त्रेण and प्रायश्चित्तं न विद्यते for न दोषस्तत्र विद्यते ।

[2] Verse cited under अङ्गिरस् by प. मा. II. i. p. 283.

[3] विपाके तु विपत्तिः स्यान्न स दोषेण लिप्यते—प. मा.

[4] भगवानब्रवीन्मनुः—ग, छ, झ.

[5] दृश्येत—क, ख.

[6] Line cited by प. मा. II. i. p. 202.

[7] दद्यात्पश्चात्तु तापेन—ग, छ, झ.

[8] द्रव्यैरनेकैर्विप्रान्वा तोषयेद्वा—क, ख.

[9] तन्नाश्यः—झ.

[10] पापाद्धर्मं—क, ख, घ.

अशीतिर्यस्य चापूर्णा वर्षार्धं सकलो विधिः ।
प्रायश्चित्तस्य ये[1] क्लीबबालवृद्धाङ्गनादयः ॥
तेषु सर्वेषु संचिन्त्य पादमेकं समाचरेत् ॥ २१ ॥

इत्याङ्गिरसधर्मशास्त्रे[2] [3]हिंसाप्रायश्चित्तकथनं नाम दशमोऽध्यायः

## एकादशोऽध्यायः

[4]उपपातकसंयुक्तो गोघ्नो भुञ्जीत यावकम् ।
अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम् ॥ १ ॥
कृतावापो वने गोष्ठे चर्मणा तेन संवृतः ।
द्वौ मासौ [5]स्नानमभ्यङ्गं गोमूत्रेण विधीयते ॥ २ ॥
पादशौचक्रिया कार्या अद्भिः कुर्वीत केवलम् ।
व्रतिवद्धारयेद्दण्डं [6]समन्त्रां मेखलां तथा ॥ ३ ॥
गाश्चैवानुव्रजेन्नित्यं [7]रजस्तासां सदा पिबेत् ।
[8]तिष्ठन्तीष्वनुतिष्ठेच्च व्रजन्तीष्वप्यनुव्रजेत् ॥ ४ ॥
शुश्रूषित्वा [9]नमस्कृत्वा रात्रौ [10]वीरासनं वसेत् ।

[1] प्रायश्चित्तविधैः—क, ख. [2] इत्यङ्गिरोधर्मशास्त्रे—क, ख.

[3] हिंसाधिकप्रायश्चित्तकथनं—क, ख.

[4] The following ten verses are cited under अङ्गिरस् by प. मा., II. i. p. 247—248.

[5] स्नानमभ्यस्य—ग, छ, झ; स्नानमप्यस्य—प. मा.

[6] समग्रं—क, ख.

[7] व्रजंस्तासां—ग, छ, झ; पिबन्तीं तां—घ; व्रजन्तस्तां—क, ख; रज आसां—प. मा.

[8] तिष्ठन्तीमनुतिष्ठेच्च व्रजन्तीमप्यनुव्रजेत्—क, ख.

[9] नमस्कृत्य—ग, छ, झ. [10] वीरासनी भवेत्—प. मा.

गोमतीं च [1]जपेद्विद्वानोंकारं वेदमेव च ॥ ५ ॥
आतुरामभिशस्तां वा चोरव्याघ्रादिभिर्भयैः ।
पतितां पङ्कलग्नां वा सर्वप्राणैर्विमोक्षयेत्[2] ॥ ६ ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा स्वशक्तितः ॥ ७ ॥
आत्मनो यदि वान्येषां गृहेक्षेत्रेऽथवा खले ।
भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम् ॥ ८ ॥
अनेन विधिना गोघ्नो यस्तु गा अनुगच्छति ।
[3]स गोहत्यात्मकात् पापान्मुच्यते नात्र संशयः ॥ ९ ॥
ऋषभैकादशा गाश्च दद्यात्सुचरितव्रतः ।
अविद्यमाने [4]सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥ १० ॥
एतेषां [5]विहितं पुण्यं कृच्छ्रमङ्गिरसो स्वयम् ।
धर्मविद्भिरनूचानैरुपपातकनाशनम् ॥ ११ ॥

[6]इत्याङ्गिरसधर्मशास्त्रे गोवधप्रायश्चित्तं नामैकादशोऽध्यायः[7]

## द्वादशोऽध्यायः

अत ऊर्ध्वं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् ।
यमधीत्य विमुञ्चन्ति श्रुत्वा स्मृत्वा च वै द्विजाः ॥ १ ॥
सदा त्रिषवणं स्नायात् सकृत्स्नात्वा पयः पिबेत् ।

[1] जपेद्विद्यामोंकारं—प. मा; जपेन्नित्यं विद्वानोंकारमेव च—ग.
[2] सर्वप्राणैर्वियोजयेत्—क, ख; सर्वप्राणैर्विमोचयेत्—ग, घ.
[3] स तद्वधकृतं द्वाभ्यां मासाभ्यां तु व्यपोहति—प. मा.
[4] सः सर्वं—क, ख.
[5] विधिवत्पुण्यं—ग.
[6] इत्याङ्गिरोधर्मशास्त्रे—क, ख.
[7] दशमोऽध्यायः—घ.

प्रातः स्नात्वा समारम्भं कुर्याज्जप्यं तु नित्यशः ॥ २ ॥
सावित्रीं व्याहृतीं वापि[1] जपेदष्टसहस्रकम्[2] ।
ओंकारमादितः[3] कृत्वा रूपे रूपे तथान्तरम् ॥ ३ ॥
स्थानं वीरासनं शक्तः कुर्यादासनमेव वा ।
[4]आसनं शल्यविद्धं स्यादमधःशायी भवेत्सदा ॥ ४ ॥
गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि ।
दध्यभावे[5] भवेत्तक्रं तक्राभावे तु यावकम् ॥ ५ ॥
एषामन्यतमं यच्चाप्युपपद्येत तत्पिबेत् ।
गोमूत्रेण तु संयुक्तं यावकं तत्पिबेद्द्विजः ॥ ६ ॥
एतत्तु विहितं पुण्यं कृच्छ्रमङ्गिरसा स्वयम् ।
प्रणवात्तु समारम्भो नाम्ना वज्रमिति स्मृतम् ॥ ७ ॥
[6]एतत्पातकयुक्तानां प्रायश्चित्तं विधीयते ।
महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः ॥ ८ ॥
अथोपपातकाश्चिन्त्यास्तथा कालं समादिशेत् ।
कालस्य तु यथोक्तस्य ब्राह्मणस्तत्र कारणम् ॥ ९ ॥
ब्राह्मणा एव च क्षेत्रं[7] ब्राह्मणा एव दैवतम् ।
ब्राह्मणानां प्रसादेन सूर्यो दिवि विराजते ॥ १० ॥
न ब्राह्मणसमं क्षेत्रं न ब्राह्मणसमोऽनलः ।
विधिर्न ब्राह्मणादूर्ध्वं न दैवं ब्राह्मणात्परम् ॥ ११ ॥

[1] चापि—झ.
[2] सहस्रशः—ग, छ. झ.
[3] ओंकारमग्रतः—घ.
[4] आसनं कार्यसिध्यर्थमधःशायी—क, ख.
[5] दध्नोऽभावे—क, ख, ग.
[6] ग omits two quarter verses and two half verses in the middle and reads: एतत्पापं तथोक्तस्य ब्राह्मणस्तत्र कारणम् ॥
[7] MS. D. No. 14501 (ज) begins here.

जपतां जुह्वतां चैव यच्छतां [1]च सतामपि ।
[2]क्षेत्रोऽग्नेस्तु सुसंभूतो ब्राह्मणोऽद्य विशिष्यते ॥ १२ ॥
न स्कन्दते न व्यथते [3]न विनश्यति कर्हिचित् ।
वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम् ॥ १३ ॥
देवतापितृभूतानां काचिद्भवति कस्यचित् ।
ब्राह्मणे देवताः सर्वाः स च सर्वस्य [4]देवता ॥ १४ ॥
यो हि यां देवतामिच्छेदाराधयितुमव्ययम् ।
सर्वोपायप्रयत्नेन [5]तोषयेद्ब्राह्मणान् सदा ॥ १५ ॥
[6]समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ १६ ॥

इत्याङ्गिरसधर्मशास्त्रे [7]कृच्छ्रादिस्वरूपकथनं नाम [8]द्वादशोऽध्यायः[9]
इत्युत्तराङ्गिरसम्

इत्याङ्गिरसस्मृतिः

---

[1] चिन्वतामपि—ग, ज. [2] क्षेत्राग्नेस्तु सुसंभूतात्—ग, ज, छ, झ, घ.
[3] न लीनस्य तु कर्हिचित्—क, ख.
[4] दैवतम्—ग, ज, छ, झ. [5] संतोषयति ब्राह्मणान्—ज, छ, झ, ग.
[6] This last verse is not found in ज; छ has समस्तसंपत् only.
[7] कृच्छ्रकथनं—क, ख, घ. [8] एकादशोऽध्यायः—घ.
[9] आङ्गिरसधर्मशास्त्रं समाप्तम् । हरिः ॐ—ग; आङ्गिरसस्मृतिः समाप्ता । श्रीमते रामानुजाय नमः । शुभमस्तु—छ; इत्याङ्गिरसस्मृतिः समाप्ता—घ.

# श्लोकार्धानुक्रमणी

## श्लोकार्धानुक्रमणी

ख



ग

त

न

प

# ERRATA

| PAGE | LINE | |
|---|---|---|
| १ | ८ | read स्याच्चोदनाप्रोक्त० for स्याच्चोदना प्रोक्त० |
| ३ | ५ | ,, व्याहृतय for व्याहृतयो |
| ४ | ४ | ,, दैवाद्यज्ञमध्ये for दैवाद्यज्ञमध्ये |
| १० | १ | ,, शिखाच्छेदः for शिखाच्छेदो |
| २४ | ४ | ,, स्नातश्चापकोटौ for स्नातो चापकोटौ |
| ३६ | ४ | ,, वृद्ध० for बृद्ध० |
| ३७ | १७ | ,, मुख्यः for मुख्यो |
| ४८ | १९ | ,, ०लङ्घयतो for ०लङ्घयत |
| ६० | ८ | ,, दूर्वासा जनको० for दूर्वासाजनको० |
| ६३ | ६ | ,, क्षुन्मूलः for क्षुन्मूलो |
| ६५ | २ | ,, षट्शत० for षट्छत० |
| ७१ | १४ | ,, राजमान्यस्त्व० for राजमान्यो त्व० |
| ८८ | २० | ,, वर्जयित्वा for वर्जयित्या |
| ९८ | ११ | ,, ०योऽतः for ०योऽतो |
| १०२ | ४ | ,, चेत्तत्परं for चेत्तत्पुरं |
| १०५ | १ | ,, तद्भिन्नाः for तद्भिन्ना |
| ,, | २१ | ,, दिव्याः for दिव्या |
| १०६ | १३ | ,, चाऽष्ट for नव |
| ,, | १७ | ,, ०प्रभृत्येताः for ०प्रभृत्येता |
| ११० | १६ | ,, विष्णौ for विष्णवा |
| ११८ | ६ | ,, ०त्पत्न्याः for ०त्पत्न्या |
| १२६ | २ | ,, ०स्तिलाः for ०स्तिला |
| १२९ | ११ | ,, वैद्याः for वैद्या |
| १३० | ३ | ,, शीघ्रमार्तिमान् for शीघ्रमर्तिमान् |
| १३६ | ९ | ,, ०त्कल्पतः for ०त्कल्पतो |
| ,, | १३ | ,, कार्याणां for कार्याणि |
| ,, | ११ | ,, पतिताः for पतिता |
| १५० | ५ | ,, स्यादधःशायी for स्यादमधःशायी |

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras 20, India)

| | | Rs. | A. |
|---|---|---|---|
| 1910—1. | A PRELIMINARY LIST OF THE SAṀSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṁskṛt-Devanāgarī). Boards Rs 1-8. Cloth . | 2 | 0 |
| 1912—2. | A DESCRIPTIVE CATALOGUE OF THE SAṀSKṚT MSS in the Adyar Library. *By* F.O. Schrader, Vol. I, Upaniṣads. Cloth ... | 5 | 0 |
| 3. | THE MINOR UPANIṢADS (Saṁskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṁnyāsa. Cloth ... | 10 | 0 |
| 1916—4. | AHIRBUDHNYA-SAṀHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṁskṛt). 2 Vols. Cloth ... | 10 | 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṀHITĀ. *By* F O Schrader. Cloth ... | 3 | 0 |
| 1920—6. | YOGA UPANIṢADS 20—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | SĀMĀNYA VEDĀNTA UPANIṢADS 24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | VAIṢṆAVA UPANIṢADS 14—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'AIVA UPANIṢADS 15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A Mahadeva Sastri (Reprinted 1950) ... | 5 | 8 |
| 10. | S'ĀKTA UPANIṢADS 8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri (Reprinted 1950) ... | 3 | 8 |
| 1926—11. | CATALOGUE OF SAṀSKṚT MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | SAṀNYĀSA UPANIṢADS 17—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 13. | RUKMIṆĪKALYĀṆA-MAHĀKĀVYA by Rājacūḍāmaṇi-Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... | 2 | 0 |
| 1933—14. | UNPUBLISHED MINOR UPANIṢADS—Edited *by* the Paṇḍits of the Adyar Library. ... | 5 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 1936—15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* the Paṇḍits of the Adyar Library | | |
| | Īs'a to Aitareya, Vol. I ... | 4 | 8 |
| | Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 | 0 |
| | Vols. 1 and 2, Boards ... | 9 | 8 |
| 1937—16. | MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 2 | 0 |
| 1938—17. | SAMGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 18. | PRATYABHIJÑĀHṚDAYA (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... | 3 | 0 |
| 19. | BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha—with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... | 2 | 4 |
| 20. | YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and Edited *by* Dr. G. Srinivasa Murti (Second Edition—Revised, 1952) ... | 12 | 0 |
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga: | | |
| | Vol. I. Parts I and 2. Nature and Man (Second Edition) ... | 9 | 0 |
| | Vol. II. Parts 3 and 4. God and Law (Second Edition). | 15 | 0 |
| 1939—22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... | 6 | 0 |
| 1940—23. | THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... | 3 | 0 |
| 1941—24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of S'rī Upaniṣad-Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 26. | SĀMAVEDA-SAṀHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja... | 6 | 0 |
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar ... | 3 | 8 |
| 28. | VARIVASYĀRAHASYA of Bhāsurānandanātha (Second Edition—Reprinted, 1948). Edited *by* Paṇḍit S. Subrahmanya Sastri (with English Translation Etc.) ... | 5 | 0 |
| 29. | VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar and A. N. Krishna Aiyangar ... | 15 | 0 |
| 30. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. I. (Adhyāya 1) ... | 9 | 0 |

*** Published under the auspices of the Ādyar Library Association.***

| | | Rs. | A. |
|---|---|---|---|
| 1942—31. | CATALOGUE OF THE ADYAR LIBRARY, Western Section. Part 1 ... | 5 | 0 |
| 32. | ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Dinnāga. Edited with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... | 3 | 8 |
| 33. | SOME CONCEPTS OF ALAṀKĀRA-S'ĀSTRA *by* V. Raghavan, University of Madras ... | 4 | 0 |
| 34. | VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... | 2 | 12 |
| 35. | DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K Madhava Krishna Sarma. Vol. I—Vedic ... | 15 | 0 |
| 36. | S'RĪ PĀÑCARĀTRA-RAKṢĀ of S'rī Vedānta-Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... | 4 | 8 |
| 37. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... | 6 | 0 |
| 38. | CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... | 4 | 8 |
| 1943—39. | PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... | 12 | 0 |
| 40. | VĀDĀVALĪ OF JAYATĪRTHA. Edited with English translation and Notes *by* P. Nagaraja Rao ... | 4 | 0 |
| 41. | SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... | 2 | 12 |
| 42. | UṢĀNIRUDDHA of Rāmapāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |
| 1944—43. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyāyas 2—4) ... | 9 | 0 |
| 44. | ĀS'VALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... | 6 | 4 |
| 45. | ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| 46. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| 47. | ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945—48. | RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| 49. | ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| 50. | ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| 51. | SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter 1. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 52. | VAIṢṆAVA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and edited *by* Dr. G. Srinivasa Murti ... | 10 | 0 |
| 1946—53. | NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I—Books i and ii) | 4 | 0 |
| 54. | PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāmapāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K Ramachandra Sarma ... | 4 | 4 |
| 55. | SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 3 | 12 |
| 1947—56. | THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| 57. | UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya ... | 1 | 12 |
| 58. | ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* Prof. V. R. Ramachandra Dikshitar ... | 3 | 8 |
| 59. | JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary ... | 20 | 0 |
| 60. | DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. VI—Grammar, Prosody and Lexicography ... | 25 | 0 |
| 61. | ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II, edited by Prof. C. Kunhan Raja. ... | 15 | 0 |
| 62. | DESCRIPTIVE CATALOGUE OF PALI MSS. in the Adyar Library, *by* Dr. E. W. Adikaram ... | 6 | 0 |
| 1948—63. | HARICARITA OF PARAMES'VARA—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 5 | 0 |
| 64. | GAUTAMA-DHARMASŪTRA-PARIS'IṢṬA (Second Pras'na)—Edited *by* A. N. Krishna Aiyangar ... | 9 | 0 |
| 65. | SAṀKALPASŪRYODAYA OF S'RĪ VEÑKAṬANĀTHA with the Commentaries Prabhāvilāsa and Prabhāvali. Edited *by* Paṇḍit V. Krishnamacharya Part I ... | 15 | 0 |
| | Part II ... | 15 | 0 |
| | VARIVASYĀRAHASYA of Bhāsurānandanātha—Edited by Paṇḍit S. Subrahmanya Sastri (with English translation, Etc.) Reprint of No. 28 ... | 5 | 0 |
| 1949—66. | INDIAN CAMERALISM (A Survey of some aspects of Artha-s'āstra) *by* K V. Rangaswami Aiyangar ... | 7 | 0 |
| | WHERE THEOSOPHY AND SCIENCE MEET, Vol. I. (Parts 1 and 2, Nature and Man) by a body of Experts, Edited *by* Prof. D. D. Kanga—Second Edition—Revised and Enlarged—of No. 21 ... | 9 | 0 |
| 67. | TIRUKKUṞAḶ OF TIRUVAḶḶUVAR—(In Roman Transliteration) with English Translation by Prof. V. R. Ramachandra Dikshitar ... | 3 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 68. | TIRUKKURAḶ OF TIRUVAḶḶUVAR, with English Translation *by* Prof. V. R Ramachandra Dikshitar ... | 3 | 0 |
| 69. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 4 (French) ... | 1 | 12 |
| 70. | ALAṀKĀRASAṀGRAHA by Amṛtānandayogin. Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 9 | 0 |
| 71. | YĀJÑIKYUPANIṢADVIVARAṆAM BY PURUṢOTHAMĀNANDA TĪRTHA—Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 2 | 8 |
| 1950—72 | EDICTS OF AS'OKA (Priyadars'in) With English Translation *by* G. Srinivasa Murti and A. N Krishna Aiyangar. Boards Rs. 2-0. Cloth ... | 3 | 0 |
| 73. | SOME ASPECTS OF EDUCATION IN ANCIENT INDIA (Dewan Bahadur K. Krishnaswami Rao Endowment Lectures, University of Madras, 1949) *by* Prof. C Kunhan Raja... | 2 | 8 |
| | S'AIVA UPANISADS 15—with the commentary of S'rī Upaniṣad Brahma Yogin—Edited *by* Paṇḍit A. Mahadeva Sastri—Reprint of No. 9 ... | 5 | 8 |
| | S'ĀKTA UPANIṢADS 8—with the commentary of S'rī Upaniṣad Brahma Yogin—Edited *by* Paṇḍit A. Mahadeva Sastri—Reprint of No. 10 ... | 3 | 8 |
| 74. | THE PHILOSOPHY OF BHEDĀBHEDA, *by* P. N. Srinivasachari . | 9 | 0 |
| 75. | VEDĀNTAKĀRIKĀVALĪ OF BUCCI VENKAṬĀCĀRYA—Edited *by* Pandit V. Krishnamacharya with his own Commentary and English Translation. ... | 5 | 0 |
| 76. | ĀRYA S'ĀLISTAMBA SŪTRA PRATĪTYASAMUTPĀDAVIBHAṄGA NIRDES'ASŪTRA AND PRATITYASAMUTPĀDAGĀTHĀ SŪTRA —Edited with Tibetan Versions, Notes and Introduction, etc., *by* N. Aiyaswami Sastri ... | 4 | 8 |
| 1951—77. | IDEA OF PERSONALITY—(Dr. Annie Besant Memorial Endowment Lectures, University of Madras), *by* P. N. Srinivasachari ... | 2 | 12 |
| 78. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III. (Adhyāyas 5, 6) ... | 16 | 0 |
| 79. | VARĀHAMIHIRAHORĀS'ĀSTRAM—Edited *by* A. N Srinivasaraghava Aiyangar, with his own commentary Apūrvārthapradars'ikā, Vol. I. (Adhyāyas 1—10) ... | 12 | 0 |
| | WHERE THEOSOPHY AND SCIENCE MEET, Vol II (Parts 3 and 4, God and Law) by a body of Experts, Edited *by* Prof. D. D. Kanga—Second Edition—Revised and Enlarged—of No. 21 ... | 15 | 0 |
| | EDICTS OF AS'OKA (Priyadars'in). With English Translation *by* G. Srinivasa Murti and A. N. Krishna Aiyangar—Second Edition of No. 72 Boards Rs. 2-0. Cloth ... | 3 | 0 |

Rs. A.

1952—80. DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* H. G. Narahari, Vol. V—Kāvya, Nāṭaka and Alaṅkāra ... 40 0

81. A SYNTHETIC VIEW OF VEDĀNTA *by* P. N. Srinivasachari. 5 0

82. DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. IX—Mīmāṃsa and Advaita-Vedānta ... 38 0

YOGA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Edited by Dr. G. Srinivasa Murti—Second Edition, Revised—of No. 20 .. 12 0

83. VEDĀNTASĀRA OF RĀMĀNUJA—with English Translation by Sri M. B. Narasimha Ayyangar, M.Sc. Edited *by* Paṇḍit V. Krishnamacharya ... 12 0

84. ĀṄGIRASASMṚTI—Edited *by* A. N. Krishna Aiyangar ... 6 0

## PAMPHLETS

1939—1. VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprint from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... 0 3

1940—2. RĀJAMṚGĀṄKA OF BHOJA. (Reprint from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma ... 0 4

1942—3. ṢAṬPAÑCĀS'IKĀ, a Silpas'āstra manual. (Reprint from the Adyar Library Bulletin. February, 1942). Edited *by* K. Madhava Krishna Sarma ... 0 5

4. PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprint from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma ... 0 6

5. A LIST OF MANUSCRIPTS. Catalogue of MSS. at the private Library of Trichinopoly Krishna Iyer's House at Negapatam. (Reprint from the Adyar Library Bulletin, October, 1942) ... 1 0

6. THE PATH OF GREATNESS. (Reprint from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale ... 0 6

1943—7. VIS'EṢĀMṚTA of Tryambaka Mis'ra. (An orthographical lexicon), Edited *by* H. G. Narahari. (Reprint from the Adyar Library Bulletin, May, 1943) ... 0 12

8. A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, October, 1940, May and October, 1943) ... 0 12

1946—9. DHARMACAURYARASĀYANA OF GOPĀLAYOGĪNDRA—Edited *by* H. G. Narahari. (Reprint from the Adyar Library Bulletin, October and December, 1946) ... 1 12

1948—10. SAṀSKṚTAGRANTHIVIGHAṬANA—*by* Prof. C. Kunhan Raja (Reprint from the Adyar Library Bulletin, May 1948)

| | | Rs. A. |
|---|---|---|
| 11. | CANDRAVĀKYAS OF VARARUCI—Edited *by* Prof. C. Kunhan Raja with Appendices (Reprint from the Introduction to Adyar Library Series, No. 63) ... | 2 0 |
| 12. | BHĀRATA-RĀṢṬRA-SAṄGHAṬANĀ (Indian Constitution in Sanskrit verses)—a sample—*by* Prof C Kunhan Raja (Reprint from the Adyar Library Bulletin, Vol XII) ... | 1 8 |
| 13. | LANGUAGE PROBLEM IN INDIA—(Reprint from the Adyar Library Bulletin, Vol. XII, Part 4, December, 1948 ) ... | 1 0 |
| 14. | SANSKRIT IN INDIA—*by* G. Srinivasa Murti. (Reprint from the Adyar Library Bulletin, Vol. XII, Part 3, October, 1948) ... | 1 0 |
| 15. | INFLUENCE OF INDIAN THOUGHT ON FRENCH LITERATURE—*by* Prof. Louis Renou. (Reprint from the Adyar Library Bulletin, Vols XII and XIII) ... | 0 12 |
| 1949—16. | THE FUTURE ROLE OF SANSKRIT (Sanskrit Language)—*by* C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 1, February, 1949) ... | 0 12 |
| 17. | THE FUTURE ROLE OF SANSKRIT (Sanskrit Literature, Sanskrit Scholarship and Sanskrit Scholars) *by* Louis Renou and C. Kunhan Raja (Reprint from the Adyar Library Bulletin, May, 1949) ... | 1 8 |
| 18. | DAS'AKUMĀRAKATHĀSĀRA OF APPAYĀMĀTYA—Edited *by* H. G. Narahari (Reprint from the Adyar Library Bulletin, February and May, 1949) ... | 1 0 |
| 19. | BRAHMASŪTRABHĀṢYASIDDHĀNTASAṀGRAHA *by* S'rī Upaniṣadbrahmayogin—Edited by Pandit V. Krishnamacharya. (Reprint from the Adyar Library Bulletin, Vol. XIII, Parts 2 and 3) ... | 1 8 |
| 20. | INDIA'S CULTURAL ROLE IN THE WORLD *by* C Kunhan Raja (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 4) ... | 0 12 |
| 1950—21. | ODE TO INDIA, composed by C. Kunhan Raja on the Occasion of the Proclamation of the Indian Republic on Thursday, 26th January 1950. (Reprint from the Adyar Library Bulletin, Vol. XIV, Part 1) ... | 0 6 |
| 22. | PĀDAVIDHĀNA OF S'AUNAKA with Bhāṣya—Edited *by* H. G. Narahari (Reprint from the Adyar Library Bulletin, Vols. XIII and XIV) .. | 1 0 |
| 23. | HINDU RELIGION AND HINDU CUSTOMS—*by* C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, Vol. XIV, Part 1) ... | 0 8 |
| 24. | INTRODUCTION TO EDICTS OF AS'OKA (Priyadars'in)—*by* K. V. Rangaswami Aiyangar (Reprint of the Introduction to Adyar Library Series No. 72) ... | 0 8 |
| 1951—25. | LANGUAGE—BARRIER OR BRIDGE *by* A. Sītā Devī ... | 3 4 |
| 26. | MĀNAMĀLĀ *by* Acyutakṛṣṇānandatīrtha with Rāmānanda's Commentary—Edited *by* Pandit V. Krishnamacharya. (Reprint from the Adyar Library Bulletin, February and May, 1951) ... | 2 0 |

Rs. A.

1952—27. VṚTTARATNĀVALI OF VEṄKAṬES'A—Edited with an anonymous Sanskrit Commentary and English Translation *by* H. G. Narahari (Reprint from the Adyar Library Bulletin, Vols. XV to XVII) ... 2 0

28. IN DEFENCE OF MĪMĀṀSĀ (The Essence of Hinduism)—*by* C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, Vol. XVI, Parts 3 and 4) ... 2 0

## IN THE PRESS

S'AIVA AND S'ĀKTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Edited *by* G. Srinivasa Murti.

VEDANTAS AND ALLIED WESTERN THOUGHT—By Prof. P. N. Srinivasachari.

ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar.

SAṀGĪTARATNĀKARA, English Translation—Vol. II, *by* Prof. C. Kunhan Raja.

ṚGVEDABHĀṢYA OF SKANDASVĀMIN—Edited by Prof. C. Kunhan Raja.

ARISTOTLE'S KATHARSIS AND BHARATA'S STHĀYIBHĀVAS *by* Prof. C. Kunhan Raja.

PURUṢASŪKTABHĀṢYA OF S'RĪ RANGANĀTHA YATI ALIAS NANĪYAR—With English Translation *by* Paṇḍit V. Krishnamacharya.

## READY FOR THE PRESS

VIṢṆUSMṚTIVIVṚTI—KES'AVAVAIJAYANTĪ OF NANDAPAṆḌITA—Edited *by* Prof. K. V. Rangasvami Aiyangar.

ĀS'VALĀYANAGṚHYASŪTRA with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited *by* Svami Ravi Tirtha.

NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja. Edited *by* Prof. C. Kunhan Raja.

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA—Vols. II and III. PAKṢATĀ OF GADĀDHARA—SIDDHĀNTALAKṢAṆAM OF GADĀDHARA—AVAYAVA OF GADĀDHARA—SĀMĀNYANIRUKTI OF GADĀDHARA—VYUTPATTIVĀDA OF GADĀDHARA—with commentaries.—Edited *by* Paṇḍit N. Santanam Aiyar.

TEN MAJOR UPANIṢADS—English Translation *by* G. Srinivasa Murti.

---